श्रीगणेशायनमः अनुचिंत्यमहालक्ष्मींहरिलोचनचंद्रिकां कुर्वेकुवलयानंदसदलंकारचंद्रिकां १ चिकीर्षितो विघ्नसिद्ध्यर्थमिष्टदेवतां स्तौति अमरीति अत्रचरणमेवपंकजमितिमयूरव्यंसकादिसमासाश्रयणात्परिणामालंकारः चरणेआरोप्यमाणस्यपंकजस्यारोपविषयचरणात्मतापरिणतिंविनादुरितदूरीकरणक्रियार्थलाभभावात् परिणामःक्रियार्थश्चेद्विषयी विषयात्मनेतितल्लक्षणात् नचपंकजमिवचरण

अमरीकबरीभारभ्रमरीमुखरीकृतं दूरीकरोतुदुरितंगौरीचरणपंकजं १

मितिपूर्वपदार्थप्रधानउपमितसमासएवास्त्वितिशंक्यं अमरीणांकबरीभारस्यकेशपाशस्यसंबंधिनीसौगंध्यलोभात्तत्संसृष्टायाभ्रमरीतयामुखरीकृतमितिविशेषणस्यानुगुण्याभावात् तस्यपंकजगतत्वेनैवप्रसिद्धेरिति एतद्विशेषणावगतेनचपादपतनेनाभिव्यज्यमानागौरीविषयासुरांगनागतारतिःकविगतांतांपुष्णातीतिप्रेयोलंकारोपिबोध्यः १

परस्परेति प्राञ्चौ पुरातनौ जायापती अर्थादुमामहेश्वरौ स्तुमः किंभूतौ प्रपंचस्य जीववर्गस्य मातापितृरूपौ निरुपाधिरूपाश्रयत्वाद्धितोपदेष्टृ
त्वाच्च तथा परस्परसंबधिन्यास्तपःसंपत्तेः फलवदाचरितं परस्परस्वरूपं ययोस्तौ अत्र परशब्दस्य क्रियाविनिमयविवक्षायां कर्मव्यतिहारे सर्वना
म्नो द्वे वाच्ये इति वार्तिके न द्विर्भाव असमासवद्भावे पूर्वपदस्थस्य सुपः सुर्वक्तव्य इत्यनेन सुपः स्वादेशे च परस्परशब्दव्युत्पत्तेः पार्वतीतपःसमृद्धिफ

परस्परतपःसंपत्फलायितपरस्परौ प्रपंचमातापितरौ प्राञ्चौ जायापती स्तुमः २

[illegible]

लायितः परमेश्वरः परमेश्वरतपःसंपत्फलायिता च पार्वतीत्यर्थो लभ्यते तपःसंपत्तेश्च फलं निरतिशयानंद इति तदुपमया परस्परं परमप्रेमास्प
दत्वलक्षणः शृंगारो व्यज्यमानः सौभाग्यातिशयव्यंजनमुखेन शिवयोर्भक्तिप्रकर्षे पर्यवस्यतीति सहृदयैराकलनीयम् मातापितराविति रूपका
भ्यां मुक्तोपमयोः संसृष्टिः परस्परं चोपमयोः फलाभिनिवेशकवाचकानुप्रवेशलक्षणः संकर इति दिक् २ ७

संप्रति प्रति पिपादयिषितानामलंकाराणां व्युत्पन्नेः न्यतोऽपुरुषार्थे तथा फलत्वायोगात्तस्यारसास्वादोपयिकत्वेन फलत्वं प्रेक्षावतां प्रकृतग्रंथप्रवृत्तये सूचयितुं शृंगाररसाधिदैवतं श्रीकृष्णं प्रति तत्सास्वादानंदं प्रार्थयते उद्दाल्येति सम्मुकुंदो मे मह्यं शश्वत् भवं शाश्वतिकं भग्नावरणतया सप्रप्र-काशमानं श्रेयो विगलितवेद्यांतरमानंदं रसोवैसइतिश्रुतेः रसपदाभिधेयं दिशातु ददात्वित्यर्थः यथाश्रुते मुक्तिप्रार्थनायाः प्रकृतेऽसंगत्यापत्तेः स कः योधन्यैर्महामहिमपुण्यशालिभिर्नारदादिमुनिभिर्योगकलयायोगकौशलेन हृदयाकाश्रउरसोमध्यवर्तिनो हृदयपुंडरीकस्य कोशं मुकु-

उद्दाल्ययोगकलयात्हृदयाब्जकोशं धन्यैश्चिरादपि यथारुचिगृह्यमाणः
यः प्रस्फुरत्यविरतं परिपूर्णरूपः श्रेयः स मे दिशतु शाश्वतिकं मुकुंदः १

लं अधोमुखतयाविद्यमानं उद्दाल्य रेचकप्राणायामेनोर्ध्वमुखं कृत्वा चिरात् बहुकालं यथारुचि यथेच्छं गृह्यमाणोपि रामकृष्णाद्यभिमतमूर्तिध्यान-गोचरीक्रियमाणोपि परितः पूर्णरूपमस्य तथाभूतोऽपरिछिन्नब्रह्मरूपः अविरतं निरंतरं मुक्तिदशायां स्फुरति प्रकाशत इति विरोधालंकारः औपासनिकरूपस्य कल्पितत्वेन च तत्परिहारः अथवा योगिभिरप्यचिंत्यस्वरूप इति माहात्म्यातिशयवर्णनं अत्र योगिगतभगवद्विषयक-रतिभावस्य कविगतं तं प्रत्यंगतया प्रेयोलंकारः ३ ९ ५ ५

चिकीर्षितस्य ग्रंथस्य प्रयोजनाभिधेये प्रदर्शयति  अलंकारेष्विति एतच्चोभयान्वयि  अलंकारेषु अर्थालंकारेषूपमादिषु विषये बालानामव्युत्पन्ना
नां तेष्ववगाहनस्य व्युत्पत्तेः सिद्धय इत्यर्थः  तेषां ये लक्ष्यलक्षणे तयोः संग्रहं इति नित्यसापेक्षत्वात्समासः  लक्ष्यमुदाहरणं  अलंकारत्वं च रसादि रसवदादि
भिन्नव्यंग्यभिन्नत्वे सति शब्दार्थान्यतरनिष्ठाया विषयितासंबंधावच्छिन्नाचमत्कृतिजनकतावच्छेदकतातदवच्छेदकत्वं  अनुप्रासादिविशिष्टशब्द
ज्ञानादुपमादिविशिष्टार्थज्ञानाच्च चमत्कारोदयात्तेषु लक्षणसमन्वयः  शब्दार्थयोर्ज्ञाननिष्ठचमत्कृतिजनकतायां विषयितयावच्छेदकत्वेन तद्वि

अलंकारेषु बालानामवगाहनसिद्धये  ललितः क्रियते तेषां लक्ष्यलक्षणसंग्रहः ४
येषां चंद्रालोके दृश्यंते लक्ष्यलक्षणश्लोकाः  प्रायस्त एव तेषामितरेषां त्वभिनवा विरच्यंते ५

शेषणीभूतानुप्रासोपमादेस्तन्निष्ठावच्छेदकतावच्छेदकत्वात्  रसवदाद्यलंकारसंग्रहाय व्यंग्योपमादिवारणाय च भेदद्वयगर्भसत्यंतोपादानं ४ नन्व
यं ग्रंथापहारशंकानिरासायाह  येषामिति  येषामलंकाराणां चंद्रालोके चंद्रालोकाख्यग्रंथे  दृश्वेत्यनंतरं लिख्यंत इति शेषः  तत्रस्थितानामपि
केषांचिद्दलेखनाभ्याय इत्युक्तं  यथाऽनंतरश्लोकस्योत्तरार्धं तत्रैवं दृश्यते  हृदये लेखवतोरुच्चैस्तन्वंगि स्तनयोरिवेति  स्वयं त्वन्यदेव विरचितमिति ए
वं तदीयत्वेन कथनादाशंकानिरासः  ५

संप्रत्यर्थालंकारेषु निरूपणीयेषु बहलालंकारघटकतयासु प्रसिद्धतयाच प्रथममुपमालंकारंलक्षयति उपमेति अयंचलक्ष्यनिर्देशः श्लोकलक्षणं सादृश्यलक्ष्मीश्चमत्कृतिजनकता तद्विशिष्टंसादृश्यमितियावत् धर्मधर्मिणोरभेदोपचारात् लक्षणंव्याचष्टेयत्रेति यत्र काव्ये द्वयोरित्यंसमन्यर्थः तच्चशक्तिलक्षणान्यतरसहकारेणबोधकत्वसंबंधेन उपमानसाधकगुणंचंद्रादि उपमेयवर्ण्यमानंकामिनीवदनादि सहृदयः काव्य

उपमा यत्र सादृश्य लक्ष्मीरुल्लसति द्वयोः हंसीव कृष्ण ते कीर्तिः स्वर्गंगामवगाहते १ यत्रोपमानोपमेययोःसहृदयहृदयाह्लादकत्वेनचारुसादृश्यमुद्भूततयोल्लसति व्यंग्यमर्यादांविनास्पष्टंप्रकाशते तत्रोपमालंकारः हंसीवेत्युदाहरणं

भावनापरिपक्वबुद्धिः व्यंग्यस्यमर्यादाप्रतीतिनियमरूपाययासाव्यंजनेत्यर्थः अत्रचोपमानोपमेययोरिति स्वरूपकथनं नतुलक्षणांतर्गतं व्यावर्तनीयाभावात् आत्माश्रयापादकत्वाच्च उपमानत्वोपमेयत्वयोरुपमाघटितत्वात् एतच्चाग्रे व्यक्तीभविष्यति इत्थंचालंकारत्वेसतिसादृश्यत्वमुपमालंकारलक्षणंबोध्यं एवमग्रेप्यधिकारप्राप्तमलंकारत्वविशेषणंबोध्यं हंसीत्यादि अत्रतावदिवार्थसादृश्येनिरूपितत्वसंसर्गेणहं

स्यादेरन्वयः साद्दश्यस्य प्रयोजकत्वसंसर्गेण स्वर्गगावगाहनाश्रयत्वरूपे साधारणधर्मे तस्य च स्वरूपसंबंधेन कीर्तौ साद्दश्यस्य निपातार्थत[illegible]र्थे
प्रतिसाक्षात्संबंधेन विशेष्यत्वे विशेषणत्वे च बाधकाभावात् तथा च हंसीनिरूपितसाद्दश्यप्रयोजकस्वर्गगाकर्मकावगाहनाश्रयत्वव[illegible]
तिबोधः नचैवं स्वर्गगावगाहनमिव शब्दश्चेत्याद्यग्रिमग्रंथे धात्वर्थस्य समानधर्मत्वोक्तिर्विरुद्धेति वाच्यं तदाश्रयत्वस्य समान[illegible]
तथात्वस्योक्त्या तात्त्वेन विरोधाभावात् तथासति तत्रैव कुतो न साद्दश्यान्वय इति चेत् न धात्वर्थनिष्ठविशेष्यतानिरूपितप्रका[illegible]
णशाब्दबोधे विशेष्यतया विभक्त्यर्थोपस्थितेर्हेतुत्वात् न च निपातार्थभिन्नवृत्तित्वेन प्रकारताविशेषणीयेति वाच्यं घटो न पश्यती[illegible]
न्विताभावस्य कर्मतासंसर्गेण दर्शनेन्वयापत्तेः यदि तु धात्वर्थेपि नासर्यवशात् साद्दश्यान्वयोनुभवसिद्धस्तदा धात्वर्थनिष्ठविशेष्यतानि[illegible]
रतासंबंधेन नान्वयबुद्धिं प्रति नञ्जन्योपस्थितेः प्रतिबंधकत्वमात्रं परिकल्प्य घटो न पश्यतीत्यादौ पूर्वोक्तान्वयबोधो निराकरणी[illegible]
क् एवमरविंदमिव सुंदरं वदनमित्यादा[illegible]रविंदादिनिरूपितसाद्दश्यस्य प्रयोजकतासंसर्गेण सुंदरपदार्थैकदेशेपि सुंदरत्वेनुभ[illegible]
न्वयस्तद्विशिष्टस्य चाभेदेन मुखादौ इत्थं चारविंदनिरूपितसाद्दश्यप्रयोजकसौंदर्यवदभिन्नं वदनमित्यन्वयबोधः अरविंदसुंदरमिति स[illegible]
दपदे न अरविंदनिरूपितसाद्दश्यप्रयोजकत्व[illegible] तस्याभेदेन पदार्थैकदेशे सौंदर्येन्वेति एवं चारविंदनिरूपितसाद्दश्यप्रयोजकाभिन्नसौंदर्य[illegible]
न्नं वदनमित्यन्वयबोधः एकदेशान्वय[illegible] पदमिदं च लक्षणया सदर्थबोधकं सुंदरपदं तु तात्पर्यग्राहकमित्येके अरविंदमि[illegible]

त्वारविंदनिरूपितसादृश्यवद्वदनमिति बोधः सादृश्यस्य निपातार्थतयाभेदेन नामार्थान्वये बाधकाभावात् अरविंदमिव भातीत्यत्र भातेर्ज्ञानार्थकत्वे ऽरविंदपदस्य अरविंदनिरूपितसादृश्यप्रकारकज्ञानविषये लक्षणा तस्य चाभेदेन मुखादावन्वयः शेषं तात्पर्यग्राहकं पूर्वोक्तदिशा वा सादृश्य-स्येव प्रकारितासंसर्गेण धात्वर्थेन्वयः अत्रैव सौंदर्येणेति धर्मोपादाने तृतीयार्थस्य प्रयोज्यत्वस्य भासादृश्येन्वयात्सौंदर्यप्रयोज्यारविंदनिरूपित

इयं च पूर्णोपमेत्युच्यते हंसीकीर्तिः स्वर्गंगावगाहनमिवशब्दश्चेत्येते षामुपमानोपमेयसाधारणधर्मोपमावाचकानां चतुर्णामप्युपादानात्

सादृश्यप्रकारकज्ञानविषय इति बोधः आद्यकल्पे तु अरविंदपदमेव सर्वार्थबोधकं नितरत्तात्पर्यग्राहकमिति ध्येयं इयं च सादृश्यस्य पदार्थतिरस्कृ मते शाब्दबोधरीतिरुपदर्शिता तस्य समानधर्मरूपत्वे तु चंद्र इव मुखमित्यादौ चंद्रवृत्तिधर्मवन्मुखमिति बोधः अत्रैवाह्लादकमिति समानधर्मो पादाने इवार्थस्य धर्मस्याह्लादकत्वे पदार्थैकदेशेऽन्वयः तदसहिष्णुतायां तु चंद्रनिष्ठाह्लादकत्ववति आह्लादकपदस्य लक्षणा चंद्रादिपदं तात्प

र्थग्राहकं 'चंद्रसदृशमित्यत्राप्येकदेशे सादृश्ये चंद्रान्वयः ससंबंधिकत्वात् सदृशपदं वा चंद्रसादृश्यविशिष्टलाक्षणिकं अत्रैवाह्लादकत्वेनेत्युक्तावभे
दस्तृतीयार्थस्तस्य च सदृशपदार्थैकदेशे धर्मेन्वयस्तथा चाह्लादकत्वाभिन्नचंद्रवृत्तिधर्मवदभिन्नं मुखमिति बोधः सदृशपदमेव वा समर्वार्थबोधकमि
तरन्नामर्थग्राहकमित्येवंविधा अन्वयसरणिश्रेणयस्तत्र तत्र शब्दव्युत्पत्तिनिपुणैरनुसंधेया इत्यलं प्रसक्तानुप्रसक्तपरिचिंतनेन ६
पूर्णोपमेतीत्यनंतरं मालंकारिकैरिति पूरणीयं तत्वं च विशेषत्वउपात्तशब्दशक्तिप्रतिपादितोपमानोपमेयकत्वे सति विशेषतः शब्दोपात्त
समानधर्मकत्वे च सति विशेषतः स्वनिरूढशब्दगम्यत्वं स्वपदमुपमापरं उपमानलुप्तायामपि लक्षणयोपमानप्रतिपत्तेस्तद्वारणाय शाब्दी
ति उपमेयलुप्तायां स्मरवधूयंतीत्यादावात्मनउपमेयस्याध्याहृते नात्मानमिति शब्देन बोधनादुपात्तेति शब्दविशेषणं एवमपि नन्वील
नेनाप्योपमेयस्य काव्यस्य सदृशं न दृश्यत इत्येवंविधायां लुप्तोपमानायामुपमानस्य च सदृशपदोपात्तत्वाद्विशेषत इति उपमेयोपमान
तावच्छेदकरूपेणेत्यर्थः धर्मलुप्तायामप्युपमावाचकेन सामान्यतो धर्मस्योपात्तत्वाद्विशेषत इति उपमाप्रयोजकतावच्छेदकरूपेणेत्यर्थः वा
चकलुप्तायामपि लक्षणयोपमानादिपदेनोपमावगमात्तद्वारणाय विशेषतः स्वनिरूढेति उपमायां च निरूढा इववद्वायथा शब्दा इत्याद्यभियुक्तो
क्तिसंगृहीता इवादयः अत्र निपातरूपस्येवादेरुपसर्गवत् द्योतकत्वमेव कथमन्यथा शरैरुस्रैरिवोदीच्यानुद्धरिष्यन्रसानिवेत्यादावुस्रादिप
देनरन्तृतीयादिसंगतिः उस्रादेरुद्धरणक्रियां प्रत्यकरणत्वात् इवार्थसादृश्यान्वयित्वेन करणीभूतशरविशेषणत्वाभावाच्च द्योतकत्वेतूस्रा

द्विपदस्योक्तसदृशपद्मनयोक्तसदृशैः शौरेरिति शौरविशेषणत्वेन तृतीयादिसंगतिरिति वैय्याकरणमतं नुनादरणीयं उपास्यते गुरुरित्यादौ धात्वर्थासन्न क्रियाया अकर्मकतया कर्मलकारानुपपत्तिरूपबाधकस्योपसर्गवाचकताया मिवेवादि द्योतकताया मभावेन दृष्टांतवैषम्यस्य स्फुटत्वात् विशेषणविशेष्ययोः समानविभक्तिकतायां विशेष्येण सहैकार्थं भवेद्यत्र विशेषणं तत्र लिंगादयः प्रायो विशेष्यस्था विशेषणइत्यनुशासनस्येवोपमानोपमेययोरपि तस्यां लिंगसंख्याविभेदेपि उपमानोपमेयता विभक्तिः पुनरेकैव उपमानोपमेययोरित्यनुशासनस्य सत्वेनोपमानपदोत्तरतृतीयादेः साधुत्वार्थनयोपपत्तेश्च तस्माद्वाचकत्वमेवेवादीनां युक्तं चैतत् अन्यथा सकलालंकारिकसंमतस्येवशब्दप्रयोगे श्रौतीत्वस्य दत्तजलांजलितापत्तेः रूढिप्रयोजनयोरन्यतरस्याभावेन चंद्रादिपदेन चंद्रसदृशलक्षणायां निषिद्धलाक्षणिकत्वरूपनेयार्थत्वदोषापत्तेश्च अपि च इवादेर्द्योतकत्वनये चंद्रादेरुपमानस्य पदार्थैकदेशतया तत्र साधारणधर्मान्वयानुपपत्तिरिति दिक् उपमानेत्यादि उपमानत्वं चोपमानिरूपकत्वेन विवक्षितत्वं तदाश्रयत्वेन विवक्षितत्वं चोपमेयत्वं साधारणत्वं च धर्मस्य स्वारसिकमौपचारिकं विंबप्रतिविंबभावकृतं श्लेषकृतं वस्तुप्रतिवस्तुभावेन समासभेदाश्रयणेनेत्यनेकधा चित्रमीमांसायां प्रपंचितं तत्र स्वर्गंगावगाहनस्य तथात्वमौपचारिकं कीर्तेस्तस्य स्वारसिकत्वाभावात् उपादानादिति वाचकस्योपादानं निर्देशः इतरेषां तु शब्देन प्रतिपादनं तदिति चिंतनीयं ६ ७

साधारण्यप्रकारविशेषोपदर्शनायोदाहरणांतरमाह यथावेति गुणदोषाविति गुणदोषावर्थात्सरस्य गृह्णन् जानन् बुधः पंडितः पूर्वं पूर्वनिर्दिष्टं गु-
णं शिरसाश्लाघते आंदोलितेन शिरसा अभिनंदयति परं परतो निर्दिष्टं दोषं कंठे नियच्छति निरुणद्धि वाचा कंठात् बहिर्नोद्घाटयतीत्यर्थः कद्व
इंदुः क्ष्वेडो गरलं गृह्णन् उपाददान ईश्वरो हर इव सोपि हि पूर्वं चंद्रं शिरसाश्लाघते तत्पूर्वकं धारयति परं च गरलं कंठे नियच्छति स्थापयतीति

यथावा गुणदोषौ बुधो गृह्णन्निंदुक्ष्वेडाविवेश्वरः । शिरसाश्लाघते पूर्वं परं कंठे नियच्छति ॥ ७ ॥ अत्र यद्यपि उ-
पमानोपमेययोर्नैकः साधारणो धर्मः उपमाने ईश्वरे चंद्रगरलयोर्ग्रहणमुपादानं तयोर्मध्ये पूर्वस्य चंद्रस्य
शिरसाश्लाघनं वहनं उत्तरस्य गरलस्य कंठे नियमनं संस्थापनं उपमेये बुधे गुणदोषयोर्ग्रहणं ज्ञानं तयोर्मध्ये पूर्व-
स्य गुणस्य शिरसाश्लाघनं शिरःकंपनाभिनंदनं उत्तरस्य दोषस्य कंठे नियमनं कंठादुपरि वाचा अनुद्घाटनमिति भेदात्

क्ष्वेडस्तु गरलं विषमित्यमरः ७ शंकते अत्र यद्यपीति साधारणत्वेनाभिमतो धर्मः गृह्णन् शिरसाश्लाघते पूर्वमित्यादिनोक्तो यद्यपि नैको न साधारण
इति योजना गृह्णन्नित्यादिनोक्त एकोपि धर्मः साधारणो नेति वा यथाश्रुते साधारणस्य साधारणत्वाभावोक्तेरसंगतत्वापत्तेः साधारण्याभावे हेतुः
उपमान इत्यारभ्य इति भेदादित्यंतेनोक्तः

यथेत्यादि वाचकलुप्तेति वाचकत्वं चात्रानुपूर्वीविशेषवत्तयोपमाबोधनेनिरूढत्वं तच्चशक्त्या निरूढलक्षणयावा तत्राद्यमिवादेर्द्वितीयंतुतुल्य त्यदादेरितितदभावात्तडिद्गौरीत्यादौवाचकलोपः समासानुशासनेननिरूढलक्षणावगमेपिआनुपूर्वीविशेषवत्तयाशब्दविशेषस्यतदबोधना त् शास्त्रकृतइति शास्त्रप्रयुक्तइत्यर्थः कर्पूरंतीत्यत्रेति अत्रसर्वप्रातिपदिकेभ्यःक्विपूवावक्तव्यइत्यनेनविहितःक्विपूलुप्तोपिस्मर्यमाणोध

साचाष्टधा यथा वाचकलुप्ता १ धर्मलुप्ता २ धर्मवाचकलुप्ता ३ वाचकोपमेयलुप्ता ४ उपमानलुप्ता ५ वाचकोपमानलुप्ता ६ धर्मोपमानलुप्ता ७ धर्मोपमानवाचकलुप्ताचेति ८ तत्रोपमानलोपरहिताश्चत्वारोभेदास्तडिद्गौरीत्यादिश्लोकेनप्रदर्शिताः तदन्तोभेदाउत्तरश्लोकेनदर्शिताः तत्रतडिद्गौरीत्यत्रवाचकलोपस्तडिदिवगौरीत्यर्थेउपमानानिसामान्यवचनैरितिस मासविधायकशास्त्रकृतः इंदुतुल्यास्येत्यत्रधर्मलोपःसत्वैच्छिकःनशास्त्रकृतः कांत्याइंदुतुल्यास्येत्यपिवक्तुंशक्यत्वा त् कर्पूरंतीत्यत्रधर्मवाचकलोपः कर्पूरमिवाचरंतीत्यर्थेविहितस्यकर्पूरवदानंदात्मकाचारार्थकस्यक्विपइवशब्दे नसहलोपात्

र्ममात्ररूपंआचारंबोधयति कर्पूरपदंचलक्षणयाकर्पूरसादृश्यं तस्यचातिरिक्तत्वेपूर्ववत्प्रयोजकतासंसर्गेणाचारेन्वयोधर्म रूपत्वेत्वभेदेन वस्तुतस्तुक्विपूलोपाप्रतिसंधानेपितथाबोधात्कर्पूरादिशब्दाएवकर्पूरादिसादृश्यप्रयोजकाभिन्नंतत्सादृश्याभिन्नंवाचारंलक्षयंतीतियुक्तं

ननु वाचकस्येवादेरनुपादानाल्लोपोयुक्तः साधारणधर्मस्यत्वाचाररूपस्य क्विबुपात्ततया कथंलोपस्तत्राह कर्पूरिवदानंदात्मकाचारार्थस्य क्विपइनि कर्पूरस्येवेतीवार्थेवतिः आनंदात्मकः जनकतासंबंधेन वस्तुगत्या आनंदस्वरूपेय आचारस्तद्बोधकस्येत्यर्थः ननु क्विप्लोपाज्ञानेप्याचारप्रतीतेः कर्पूरादिपदानामेव तद्बोधकत्वपक्षे कथंधर्मलोपः संगमनीयइतिचेत् अत्रप्राचः एवमपि तद्वाचकतया विहितस्य क्विपो लोपात्तल्लोपव्यपदेशः

अत्रधर्मल्लोपऐच्छिकः नयनयोरानंदात्मकतया
कर्पूरंनीतितदुपादानस्यापिसंभवादिति ७

अतएवात्र समानार्थकः क्यचूनोपात्तः तस्यालुप्तत्वादित्याहुः नव्यास्तु धर्ममात्ररूपस्याचारस्योपादानेपि आनंदत्वादिना विशेषरूपेणानुपादानाद्धर्मलोपोयुक्त एव अन्यथाइंदुतुल्यास्येत्यादेर्धर्मलुप्तोदाहरणस्यासंगतत्वापत्तेः नन्वेवं क्यजादावपि धर्मलुप्तास्यादिति वाच्यं इष्टापत्तेरित्याहुः

स्मरवधूयंतीत्यत्रेति ननूपमानादाचार इति कर्मभूतादुपमानादाचारे क्यचो विधानात्स्मरवधूंरतिमिवाचरंतीत्यवगमेप्यात्मानमन्यां वेति कथं निर्णयस्तत्रा
ह विशेषणेति रत्यनुरूपाचरणस्य कांतिकरणकत्वरूपविशेषणसामर्थ्यादित्यर्थः कांतेः स्वरसतः स्वीयत्वावगमादिति भावः नचात्मन उपमेयस्य तन्वी
पदेनोपादानात्कथं लोप इति वाच्यं तस्या द्वितीयांततया कर्मभूतोपमेयासमर्पकत्वात् आत्मानमित्यध्याहारेणैव तद्बोधात् अत्र च स्मरवधूपदेन स्मर

कांत्या स्मरवधूयंतीत्यत्र वाच्कोपमेयलोपः अत्र कांत्येति विशेषणसामर्थ्यात्स्वात्मानं कामवधूमिवाचरंती
त्यर्थस्य गम्यमानतया स्वात्मन उपमेयस्य सहोपमावाचकेनानुपादानात् स लैङ्गिकः स्वात्मानं स्मरवधूयंतीत्युप
मेयोपादानस्यापि संभवात् काकतालीयमित्यत्र काकतालशब्दो वृत्तिविषये काकतालसमवेतक्रियावर्तिनौ ते
न काकागमनमिव तालपतनमिव काकतालमिती वार्थे समासाच्च तद्विषयादिति ज्ञापकात्समासः उभयत्रोप
मेयं स्वस्य क्वचिद्गमनं तत्रैव रहसि तन्व्या अवस्थानं च तेन स्वस्य तस्याश्च समागमः

वधूसादृश्यं लक्ष्यते तस्य च प्रयोजकत्वसंसर्गे
णाभेदेन वाऽचारेन्वयः तथा च स्मरवधूसादृश्याभिन्न आत्मकर्मकोय आचारस्तदाश्रयस्तन्वीति बोधः काकतालीयेति वृत्तिविषये समासविषये ज्ञापका
दिति इवार्थे समासाभावे तद्विषयादित्यनेनेवार्थविषयसमासानुवादोऽनुपपन्नस्तद्ज्ञापक इत्यर्थः उभयत्र काकागमनतालपतनयोः उपमेयमिलनं

तरं क्रमेणेति शेषः तेनेति काकतालसमवेतक्रियापरयोः काकतालपदयोरिवार्थे समासेनेत्यर्थः काकतालसमागमेति अयंभावः काकागमनतालपत
नयोरुपमानत्वे तदुपमेययोः स्त्रीयगमननन्यवस्थानयोः पृथगनुपात्तत्वेनोपमेयतयान्वयायोगात्काकतालसमागम एवोपमानं इत्थंच काकतालसमाग
मसदृशं काकतालपदार्थस्तस्य चाभेदेन स्वीयतन्वीसमागमरूपे उपमेयेऽन्वय इति तत इति तादृशसमासोत्तरमित्यर्थः इतितदर्थ इति काकतालप

काकतालसमागमसदृश इति फलति ततः काकतालमिव काकतालीयमिति द्वितीयस्मिन्निवार्थे
समासाच्च तद्विषयादिति सूत्रेण इवे प्रतिकृताविति अधिकारस्थेन छप्रत्ययः तथाच पतनदलितं
तालफलं यथा काकेनोपभुक्तमेवं रहोदर्शनक्षुभितहृदया तन्वी त्वेनोपभुक्तेति तदर्थः ततश्चात्र

दलक्षितस्य काककृततालफलोपभोगसदृशस्याभेदेन तन्वीरतिलाभरूपेणोपमेयेनान्वयादिति भावः अत्र पतनदलितमिति रहोदर्शनक्षुभितहृदयेति
च बिंबप्रतिबिंबभावापन्नधर्मस्वरूपकथनं नत्वेवमन्वयाकार इति बोध्यं नचसकृदुच्चरिताभ्यां काकतालपदाभ्यां कथमुपमानद्वयावगम इति वाच्यं
अनुभवानुसार्यनुशासनेन व्युत्पत्तिवैचित्र्यस्य स्फुटं प्रतिपत्तेरिति एवं दुरूहत्वात्सद्यं व्याख्याय तत्रोपमानलुप्तादींश्चतुरोपि भेदान्प्रदर्शयितुमाह ततश्चेति

काकागमनेत्यादि काकागमनतालपतनरूपो यः समागमस्तद्रूपस्येत्यर्थः इदं न काकागमनमिव तालपतनमिवेति महाभाष्यगतविग्रहवाक्यविरोधशंकापरिहारायोक्तं समागमस्य तादृशक्रियाद्वयाभिन्नत्वेनोक्तयुक्त्या तस्योक्तार्थ एव पर्यवसानात् विशिष्टोपमायां विशेषणोपमावगतिवत्समागमोपमायामपि तदवयवक्रिययोर्यथायोगं गम्यमानामुपमामभिप्रेत्य महाभाष्यकृतां तादृशविग्रहवाक्यप्रणयनमित्याशयः धर्मस्यानुपादान इति तत्स्था

काकागमनतालपतनसमागमरूपस्य काककृततालफलोपभोगरूपस्य चोपमानस्यानुपादानात् प्रत्ययार्थोपमायामुपमानलोपः समासार्थोपमायां वाचकोपमानलोपः सर्वोऽप्ययं लोपश्छप्रत्ययविधायकशास्त्रकृतः अवितर्कितसंभवमिति साधारणधर्मस्यानुपादाने प्रत्ययार्थोपमायां धर्मोपमानलोपः समासार्थोपमायां धर्मोपमानवाचकलोपः इति सूक्ष्मया दृश्यावधारितव्यं एतेषामुदाहरणांतराणि विस्तरभयान्न लिख्यते

नेऽभवत्किं ब्रवीमि वेइ इति पाठ इति भावः इतिश्रीमत्तत्सदुपाख्यरामभट्टसूरिवरात्मजवैद्यनाथविरचितायामलंकारचंद्रिकाख्यायां कुवलयानंदटीकायामुपमाप्रकरणं संपूर्णं यद्यप्युपमाने रूपणानंतरं तन्मूलालंकारेषु संभवत्सादृश्या उपमेयोपमैव प्रथमं निरूपयितुमुचिता न त्वारोपितसादृश्यनिबंधनोऽनन्वयस्तथापि तं द्वितीयसदृशव्यवच्छेदफलकतया तृतीयसदृशव्यवच्छेदफलिकामुपमेयोपमामपेक्ष्य बुद्धावुपस्थितिकमभिप्रेत्य प्रथमं निरूपयति छ

उपमानोपमेयत्वमिति उपमानत्वमुपमेयत्वंचेत्यर्थः इंद्वांतेश्रूयमाणत्वात् विवक्ष्यतइतिचशेषः एवंचैकस्यैववस्तुनोयदुपमानत्वमुपमेयत्वं चविवक्ष्यतेतदनन्वयइत्यन्वयः असंभवशंकानिरासायमध्येउदाहरणोक्तिः नन्वक्तलक्षणस्यभणितिरिवमतिर्मतिरिवचेष्टेत्यादिरशनोपमायामतिव्याप्तिःतत्रमत्यादेरेकस्यैववस्तुनउपमानत्वस्योपमेयत्वस्यचवर्णनात् अथैकस्यवस्तुनोयदेकनिरूपितमुपमानत्वमुपमेयत्वंचेतिविवक्षितं एकपदस्यावृत्तिकल्पनात् इत्थंचरशनोपमायांमत्यादेश्चेष्टादिनिरूपितमुपमानत्वंभणित्यादिनिरूपितंतूपमेयत्वमि

उपमानोपमेयत्वंयदेकस्यैववस्तुनः इंदुरिंदुरिवश्रीमानित्यादौतदनन्वयः ११
एकस्यैववस्तुनउपमानोपमेयत्ववर्णनमनन्वयः वर्ण्यमानमपिस्वस्यस्वेनसाधर्म्येना
न्वेतीतिव्युत्पत्तेः

त्येकनिरूपितोपमानोपमेयत्वविरहान्नातिव्याप्तिरित्युच्यते तदाखमिवजलंजलमिवखमित्युपमेयोपमायामतिव्याप्तिः तत्रैकस्यैववस्तुनोगगनस्य एकजलनिरूपितस्योपमानत्वस्योपमेयत्वस्यचवर्णनादितिचेन्नैवं एकस्यैवेतिविरोधद्योतकैवकारबलेनस्वाश्रयनिरूपितयोरुपमानोपमेयत्वयोर्लाभेन काप्यतिप्रसंगाभावात् अस्तिहिइंदुरिंदुरिवेत्यनन्वयेउपमानत्वमुपमेयत्वंचस्वाश्रयेंदुनिरूपितंनतुरशनोपमायामुपमेयोपमायांवेतिसंक्षेपः ७

कथतृतीयसदृशव्यवच्छेदलाभस्तत्राह धर्मार्थयोरिति धर्मार्थयोर्मध्यइत्यर्थः मुखनः शब्देन नथाचप्राप्तस्यपुनर्वचनंतदितरपरिसंख्यार्थमितिन्यायादि
हापितृतीयसदृशव्यावृत्तिलाभइतिभावः खमिवेति शरद्वर्णनमिदं खमाकाशमिवजलं कालुष्यापगमेननिर्मलत्वातिशयात् शेषंस्पष्टं निर्मलत्वादीना

धर्मार्थयोः कस्यचित्केनचित्साहृश्येवर्णितेतस्याप्यन्येनसादृश्यमर्थसिद्धमपिमुखतोवर्ण्यमानंतृतीयसदृशव्यवच्छेदंफलति यथावा
खमिवजलंजलमिवखंहंसइवचंद्रश्चंद्रइवहंसः कुमुदाकारास्ताराास्ताराकाराणिकुमुदानि पूर्वत्रपूर्णश्रीरितिधर्मउपात्तः इहनिर्मल
त्वादिधर्मेणोपात्तइतिभेदः उदाहरणद्वयेप्रिमकृतयोरेवोपमानोपमेयत्वकल्पनं राज्ञिधर्मार्थसमृद्धेः शरदिगगनसलिलादिनैर्म
ल्यस्यचवर्णनीयत्वात् प्रकृताप्रकृतयोरप्येषासंभवति यथा गिरिरिवगजराजोयंगजराजइवोच्चकैर्विभातिगिरिः निर्झरइव
मदधारामदधारेवास्यनिर्झरःस्रवति प्रतीपमुपमानस्योपमेयत्वप्रकल्पनं त्वल्लोचनसमंपद्मंत्वद्वक्त्रसदृशोविधुः १२

द्विपदेनशैत्यातिशयपरिग्रहः गिरिरिवेति अत्रगजः प्रकृतः अयमितिप्रकृतपरामर्शिसर्वनामनिर्दिष्टत्वात् अतएवोपक्रमाद्ग्रेप्यस्यमदधारेत्यन्वयोबो
ध्यः अत्रपूर्वार्धेउच्चकैर्विभातीतिसमानधर्मउपात्तः उत्तरार्धेस्रवतीतिसउक्तइतिदिक् इत्युपमेयोपमाप्रकरणं प्रतीपमिति लक्ष्यनिर्देशः १२ ११

ननूपमानोपमेयभावस्यैवैवक्षिकतया मुखादेरप्युपमानत्वसंभवाच्चंद्र इव मुखमित्युपमायामतिव्याप्तिरित्यत आह प्रसिद्धेति प्रसिद्धोपमानस्य उपमेय
भावः उपमेयत्वं प्रतीपं प्रतीपपदवाच्यं कुतः प्रातिलोम्यात् प्रसिद्धोपमानप्रतिकूलत्वात् उपमेयभावप्रातिलोम्यादित्यविसर्गपाठेपि प्रसिद्धोपमानस्य
य उपमेयभावस्तस्य प्रातिलोम्यादुपमानप्रतिकूलत्वादुपमानस्योपमेयत्वकल्पनं प्रतीपमित्युच्यत इति व्याख्येयं ननु प्रसिद्धस्योपमानोपमेयभावस्य
वैपरीत्यादिति यथाश्रुतरीत्या एवंविधप्रातिलोम्यस्य तृतीयपंचमप्रतीपभेदाव्यापित्वेन प्रतीपपदप्रवृत्तिनिमित्तत्वायोगादिति एवंचोक्तप्रकारेणोपमा

प्रसिद्धोपमानोपमेयभावप्रातिलोम्यात्प्रतीपं यथावा त्वल्लोचनसमानकांतिसलिले मग्नं तदिंदीवरं मेघैरंतरितः प्रिये तव मुखच्छायानु
कारी शशी येपि त्वद्गमनानुसारिगतयस्ते राजहंसा गतास्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते
नप्रातिकूल्यस्य प्रतीपपदप्रवृत्तिनिमि
त्तत्वकथनेन प्रसिद्धोपमानप्रतिकूलधर्मः प्रतीपमिति प्रतीपपंचकसाधारणं सामान्यलक्षणमिति सूचितं अतएव पंचमप्रतीपव्याख्यानावसरे वक्ष्यति उपमान
प्रातिलोम्यादिति प्रतिकूलत्वंच निरस्कारप्रयोजकत्वं एतस्य च सकलप्रतीपभेदसाधारण्यं तत्र तत्र स्फुटीकरिष्यते यथावेति प्रोषितस्य प्रियां प्रति वियोग
वेदनानिवेदनमिदं अयि प्रिये त्वदीयसादृश्येन विनोदनं विनोदो विरहयापनं तन्मात्रमपि मम दैवेन न क्षम्यते एतदेव दर्शयति यदित्यादिना त्वन्नेत्रयोः
सनाना साधारणी कांतिः शोभा यस्य तथाविधं यदिंदीवरं तत्सलिले मग्नं वर्षर्तुना जलवृद्धेः तव मुखस्य छायया कांत्या अनुकारी सदृशः शशी मेघैरंतरितस्ति

रोहितः येपीत्यपिर्भिन्नक्रमः त्वद्गमनमद्दशागतयोयेराजहंसास्तेपिगताइति अत्रकांतीत्यादिधर्मोपादानात्पूर्वोदाहरणवैलक्षण्यंबोध्यं ननूपमानादुपमेयस्याधिक्यवर्णनारूपात्‌व्यतिरेकालंकारादस्यकोभेदः उच्यते तत्रवैधर्म्यप्रयुक्तमुपमेयस्याधिक्यंविवक्षितमिहतूपमानमात्रप्रयुक्तत्वात्साधर्म्यप्रयुक्तमिति प्रतीपांतरमाह अन्योपमेयेति अन्यदवर्ण्यंउपमानंतद्रूपंयदुपमेयंतस्यलाभेनवर्णनीयस्यमुखादेरनादरोगर्वपरिहारोयत्तत्‌ प्रतीपमि

अन्योपमेयलाभेनवर्ण्यस्यानादरश्चतत्‌ अलंगर्वेणतेवक्त्रकांत्याचंद्रोपिताद्दशः १४ अत्युत्कृष्टगुणतयावर्ण्यमानस्यान्यत्रस्वसाद्दश्यमसहमानस्योपमेयंकिंचित्प्रदर्श्यतावतातस्यतिरस्कारोद्वितीयंप्रतीपंपूर्वस्मादपिविच्छित्तिविशेषशालि यथावा गर्वमसंवाह्यमिमंलोचनयुगलेनकिंवहसिभद्रे संतीदृशानिदिशिदिशिसरस्सुननुनीलनलिनानि

त्यर्थः तस्यगर्वप्रसक्तिपूर्वकत्वेनोपमेयतायाअपिपूर्वमप्राप्त्याउपमाननिरस्कृतिविशेषप्रयोजकत्वादितिभावः अतएवलाभेनेत्युक्तंनतुसत्वेनेति अप्राप्तप्राप्तेर्लाभशब्दार्थत्वात्‌ विच्छित्तिविशेषेति चमत्कारोत्कर्षेत्यर्थः उक्तरीत्योपमानतिरस्कारातिशयप्रतीतेरितिभावः गर्वमिति असंवाह्यं संवहनायोग्यंअपरिमितमितियावत्‌ भद्रेशोभनेइतिसंबोधनं नन्वितिहेत्वर्थे अव्ययानामनेकार्थत्वात्‌ पूर्वोदाहरणेकांत्येतिसमानधर्मोपादानमिहतुनेतिभेदः ७ ७

अहमेवेति सुदारुणानामतितीव्राणां गुरुः श्रेष्ठः तातेति मातुकंपसंबोधने मास्मह
वर्ण्योपमेयेति अन्यस्यावर्ण्यस्य अनादरोपि तथा प्रतीपमित्यर्थः वर्ण्यनिरूपितायान्यस्यावर्ण्यस्योपमातस्या इत्यर्थः अनिष्पत्तिवचः उच्यमाना अनि
ष्पइति दर्पमात्र कथा इत्यर्थः वर्ण्येनान्यस्येति निरूपितत्वं तृतीयार्थः किंलेनिचानीयात्वन्मुखाभमंबुजमिति श्वानमुधा निष्प्रयोजनोऽपवादः अलीकार्थकत्वेना भाव
ष्पत्तिः इत्यभिहितइतिन्यायात् तत्रनीपं मुधेति

वर्ण्योपमेयलाभेन तथान्यस्याप्यनादरः कः क्रौर्यदर्पस्ते मृत्योत्वत्तुल्याः संनिहितास्त्रियः १५ अत्युत्कृष्टगुणतया कश्चिद्युपमान
भावमसहमानस्यावर्ण्यस्य वर्ण्यमुपमेयं परिकल्प्य तावता तस्य तिरस्कारः पूर्वप्रतीपवैपरीत्येन तृतीयप्रतीपं यथावा अहमेव गुरुः
सुदारुणानामिति हालाहल मास्मतात दृप्यः ननु संति भवादृशानि भूयो भुवनेस्मिन्वचनानि दुर्जनानां वर्ण्येनान्यस्योपमाया अनिष्प
त्तिवचश्चतत् मुधापवादो मुग्धाक्षि त्वन्मुखाभं किलांबुजं १६ अवर्ण्यं वर्ण्योपमित्यनिष्पत्तिवचनं पूर्वेभ्य उत्कर्षशालि चतुर्थप्रती
पं उदाहरणे मुधापवादत्वेनोपमित्यनिष्पत्तिरुद्घाटिता यथावा आकर्णय सरोजाक्षि वचनीयमिदं भुवि शशांकस्तव वक्त्रेण पा
मरैरुपमीयते

स्यनिष्प्रयोजनत्वं उत्कर्षेति उपमानतिरस्कारातिशयप्रयोजकत्वरूपेत्यर्थः मुधापवादत्वोक्त्येति उक्तार्थमेतत् आकर्णयेति वचनी
यं अलीकतया निंदितं अतएव भुवीत्युक्तं लोकांतरे मुखासन्निधानेन विशेषादर्शनादलीकत्वग्रहायोगात् संनिधानेपि विशेषाग्रहणात्पामरैरित्युक्तं

अन्येवामनादयः अत्रचास्वरसबीजंप्रागेवावेदितं इतिप्रतीपप्रकरणं रूपकंलक्षयति विषय्यभेदेति रूप्यतेइतरव्यावृत्ततयाज्ञायतेधर्मोऽनेनेति रूपंतत्रूपमस्यासौतद्रूपस्तस्यभावस्ताद्रूप्यंचंद्रकार्यकारित्वादि विषयिणउपमानस्यअभेदताद्रूप्याभ्यांविषयस्योपमेयस्ययत्रंजनमिचरंजनंस्वोपरक्तबुद्धिविषयीकरणमितियावत् तद्रूपकमित्यर्थः रूपकंतदित्येवपाठः रूपकंत्विति पाठेतुनदित्यध्याहार्यं उपात्तबिंबाविशिष्टविषयधर्मिकाऽहार्यारोपनिश्चयविषयीभूतंउपमानाऽभेदताद्रूप्यान्यतरत्रूपकमितितुनिष्कर्षः मुखंचंद्र इत्यादौनामार्थयोरभेदान्वयव्युत्पत्तिवशादाहार्यचंद्राभेदनिश्चयाल्लक्षणसमन्वयः मुखमपरश्चंद्रइत्यत्रतुनचंद्राभेदोविषयःअपरइतिभेदस्यविवक्षितत्वात् अपितुचंद्रकार्यकारित्वरूपंताद्रूप्यमितितत्रापिलक्षणसंगतिः नच

अन्येतुपंचमंप्रतीपप्रकारंउपमानाक्षेपरूपत्वादाक्षेपालंकारमाहुः विषय्यभेद
ताद्रूप्यरंजनंविषयस्ययत् रूपकंतत्त्रिधाधिक्यन्यूनत्वानुभयोक्तिभिः १८

तस्यमुखेसत्वात्कथमारोपइतिवाच्यं चंद्रकार्यसजातीयकारित्वस्यैवमुखेसत्वादिति यद्यपिनामार्थयोरभेदान्वयानुरोधादिहापिचंद्रपदलक्षितस्यतत्कार्यकारिणोऽभेदसंसर्गेणैवमुखेऽन्वयादभेदरूपकमेवतथाप्युपमानतावच्छेदकरूपेणाभेदभानएवाभेदरूपकत्वंतत्कार्यकारित्वादिरूपेणाभेदभानेतुताद्रूप्यरूपकत्वमितितात्पर्यं अत्रकमलमनंभसिकमलेचकुवलयेतानिकनकलतिकायामित्याद्यतिशयोक्तिवारणायोपात्तेतिविषयविशेषणं आरोपश्चनिषेधानंगकत्वेनविशेषणीयः तेनापह्नुतौनातिव्याप्तिः भ्रांतिवारणायाहार्येति त्वत्पादनखरत्नानांयदलक्तकमार्जनं इदंश्रीखंडलेपेनपांडुरीकरणंविधोरि

तिनिदर्शनांधारणाय बिंबाविशिष्टेनिसंशयोत्प्रेक्षयोर्निरासाय निश्चयेत्युक्तमितिसंक्षेपः आधिक्येत्यादि आधिक्यमुपमानस्यस्वाभाविकीमवस्थामपेक्ष्योपमेयतादात्म्यावस्थायांबोध्यं एवंन्यूनत्वमपि अनुभयं आधिक्यन्यूनत्वोभयरहितं अभेदताद्रूप्यान्यतरमात्रं अयंहीत्यादि अयंवर्ण्यमानोराजायेनहेतुनापुरःनगर्यः शिवस्यापित्रिपुरदग्धृत्वात्सएवायमितिभावः नातीर्यीकमिति तृतीयमेवतातर्तीयीकं तीयादीककस्वार्थेवाच्यइतिवार्तिकानुसारात् विलोचनंविनेत्यन्वयः १९ शंभुरिति अत्राप्ययमित्यनुषंजनीयं अन्यथाऽतिशयोक्त्यापत्त्यारूपकोदाहरणत्वासंगतेः अद्यराजभावावस्थायां सम

अयंहि धूर्जटिःसाक्षाद्येनदग्धाःपुरःक्षणात् अयमास्तेविनाशंभुस्तार्त्तीयीकंविलोचनं १९
शंभुर्विश्वमवत्यद्यस्वीकृत्यसमदृष्टितां अस्यामुखेंदुनालब्धेनेत्रानंदे किमिंदुना २०

दृष्टितां समसंख्यलोचनतां एकरूपलोचनवत्तांच मुखेंदुनेति अत्रेंदुपदमिंदुकार्यकारिपरं किमिंदुनेतिप्रसिद्धचंद्रशब्देदविवक्षणात् अतश्चंद्रताद्रूप्यरूपकमिदं नचात्रोत्तरपदार्थप्राधान्यादिंदुकार्यकारिणिमुखाभेदभानान्मुखाभेदरूपकंस्यात् नतुचंद्रताद्रूप्यरूपकमितिवाच्यं व्युत्पत्तिवैचित्र्येणमुखस्यस्वनिष्ठाभेदप्रतियोगित्वसंसर्गेणान्वयाभ्युपगमात् विशेषणानुयोगिकस्यापिविशेषणसंबंधतायाःस्वामित्वस्यषष्ठ्यर्थत्ववादिभिःप्राचीनैश्चैत्रस्यधनमित्यादावंगीकारात् एवंचमुखनिष्ठाभेदप्रतियोगीचंद्रत्वत्कार्यकारीवेतिबोधान्नमुखाभेदरूपकापत्तिःमुखप्रतियोगिकाभेदस्याभानादिति एवमन्यत्राप्यूह्यं २०

असुधेति सुधासागरादुदिता उत्पन्ना प्रसिद्धा लक्ष्मीः इयं तु न तथेति न्यूनत्वोक्तिः अतिरिच्यत इति निष्कलंकतया अधिको भवतीत्यर्थः २१ लक्षणश्लो
कं व्याचष्टे विषय्युपमानेत्यादि विषयिणोऽभेदेन रूपेणेति पाठः रूपेण आह्लादकत्वादिना ताद्रूप्येण कचित्ताद्रूप्येण चेत्येव पाठः परमार्थतस्तु प्रामा
णिकपुस्तके तु विषयिणो रूपेण विषयस्य रंजनमिति युक्ततरः पाठः तेन तच्चेत्यादेर्नैयत्यं न कस्यामिति ध्येयं हरिद्रादिना पटादिरंजने प्रयुक्तस्य रंजनशब्दस्य हमहृ

साध्वीयमपरा लक्ष्मीरसुधासागरोदिता अयं कलंकिनश्चंद्रान्मुखचंद्रो तिरिच्यते २२ विषय्युपमानभूतं पद्मादि विषयस्तदुपमेयं वर्ण
नीयं मुखादि विषयिणो रूपेण विषयस्य रंजनं रूपकं अन्यरूपेण रूपवतः करणात् तच्च कचित्प्रसिद्धविषय्यभेदपर्यवसितं कचिन्द्रंदं प्रतीय
मान एव तदीयधर्मारोपमात्रपर्यवसितं तत्रश्च रूपकं तावद् द्विविधं अभेदरूपकं ताद्रूप्यरूपकं चेति द्विविधमपि प्रत्येकं त्रिविधं प्रसिद्धवि
षय्याधिक्यवर्णनेन न्यूनत्ववर्णनेनानुभयोक्त्या चेत्येवं रूपकं षड्विधं अयं हीत्यादिश्लोकार्धश्लोकेनाभेदरूपकाणि अस्यामुखेंदुनेत्यादिसार्धश्लो
केन ताद्रूप्यरूपकाणि आधिक्यन्यूनत्वानुभयोक्त्युदाः क्रमशातिलोम्येनोदाहृतानि

तो बीजमाह अन्यरूपेणेति रूपं रक्तपीतादिकं अभेदता
द्रूप्येच तथान्वान्यदीयधर्मेणान्यस्य तद्गुणसंपादनत्वसामान्यादिह गौण्या रंजनशब्दप्रयोग इति भावः तच्चेति रंजनं चेत्यर्थः प्रसिद्धेति कविसंप्रदायप्रसिद्धो
पमानाभेदेन लब्धात्मकमित्यर्थः रूपपदस्याभेदताद्रूप्योभयसाधारणत्वादिति भावः अभेदेन रूपेण चेति पाठे तु तच्चेत्यत्र चशब्दो हेत्वर्थकः तेन पूर्वोक्तस्यैव समर्

र्थनमिति नंपोनरुक्त्यं तावत् विधांतरोक्तेः प्राक् उद्देशक्रमप्रातिलोम्येनेति निर्देशक्रमवैपरीत्येनेत्यर्थः एतदेवविशदयति येनेत्यादि विशेषणेनेतिहेतौ तृतीया पुरदग्धृत्वं विशेषणहेतुकशिवाभेदानुरंजनादित्यर्थः ननुन्यूनत्ववर्णनेभेदरूपकयोः प्रतीतेः कथंचमत्कारितेत्यत आह अभेददार्ढ्यापादकत्वादिति

येनदग्धाइति विशेषणेन वर्णनीयराज्ञि प्रसिद्धशिवाभेदानुरंजनाच्छिवस्य पूर्वावस्थानो वर्णनीयराजभावावस्थायां न्यूनत्वाधिक्ययोरवर्णनाच्चानुभयाभेदरूपकमाद्यं तृतीयलोचनमहाणोक्त्या पूर्वावस्थानो न्यूनताप्रदर्शनात् न्यूनाभेदरूपकं द्वितीयं न्यूनत्ववर्णनमपि अभेददार्ढ्यापादकत्वाच्चमत्कारि विषमदृष्टित्वपरित्यागेन जगद्रक्षकत्वोक्त्या शिवस्य पूर्वावस्थानो वर्णनीयराजभावावस्थायां उत्कर्षविभावनादधिकाभेदरूपकं तृतीयं एवमुत्तरेष्वप्युदाहृत्यरूपकोदाहरणेषु पिक्रमेणानुभयन्यूनाधिकतावाउन्नेयाः अनेनैवक्रमेणोदाहरणांतराणि

विशेषनिषेधस्यशेषाभ्यनुज्ञाफलकतया निषिद्धव्यतिरिक्तसकलगुणशालिताप्रतीतावेकदेशाविकृतमनन्यवद्भवतीति न्यायेनाभेदनिश्चयसंपादकत्वादित्यर्थः विभावनात् प्रकाशनात् ७ ७ ७

चंद्रज्योत्स्नेति राजानंप्रतिकस्यचिदुक्तिः हेभगवन् चंद्रज्योत्स्नावत्‌विशदंश्वेतंपुलिनंयस्यतथाभूतेऽस्मिन्शरय्वाः शरयूनामकनद्याः सैकतेसिकनाम
यद्देशाकयोश्चित्सिद्धतरुणयोः चिरतरंअनितिचिरकालंवादरूपंद्यूतमभूत् कीदृकतत्राह एकः सिद्धयुवाकैटभंदैत्यविशेषंप्रथमंनिहतंवक्तिवदति
अन्यः कंसंप्रथमंनिहतंवक्ति सः कंसकैटभयोर्निहंतात्वंतत्रतयोर्मध्येपूर्वंकोहतइतिनत्वंकथयेत्यन्व यद्यपिमुनिप्रभृतावेवभगवन्नित्यामंत्र

चंद्रज्योत्स्नाविशदपुलिनेसैकतेस्मिन्शरय्वावादद्यूतंचिरतरमभूत्सिद्धयूनोःकयोश्चित् एकोवक्तिप्रथमनिहतंकैटभंकंसमन्यस्त्
त्वंसत्वंकथयभगवन्कोहतस्तत्रपूर्वं अत्रसत्वमित्यनेनयःकंसकैटभयोर्हंतागरुडध्वजस्तत्तादात्म्यंवर्णनीयस्यराज्ञः प्रतिपाद्यतंप्रतिकंस
कैटभवधयोःपौर्वापर्यप्रश्नव्याजेनतत्तादात्म्यदार्ढ्यकरणात्पूर्वावस्थातउत्कर्षापकर्षयोरविभावनाच्चानुभयाभेदरूपकं ७,

णमुचितंनराजादौनथापिराज्ञोभगवत्तादात्म्यवर्णनादनौचित्यंपरिहरणीयं क्वचित्तुभवनेतिपाठः अत्रज्योत्स्नापदेनैवचंद्रिकालाभेपिचंद्रपदंशारदपूर्णचंद्र
परतयानापुष्टार्थं पुष्पमालस्तत्रपुष्पपदमिवोत्कृष्टपुष्पपरत्वयेतिबोध्यं वादयोग्यतासूचनायय्यूनोरित्युक्तं अयंहीत्युदाहरणेऽभेदारोपहेतुभूतंपुरद
हकत्वरूपंसाधर्म्यमुपात्तं इहतुजगद्रक्षकत्वादिकंनतद्गम्यमानमितिभेदः ७ ७ ७.

वेधा इति द्वेधा कांताधर्मिकत्वकनकधर्मिकत्वरूपविधाद्वययुक्तं श्रमं बलवदनिष्टाननुबंधिसुखसाधनत्वभ्रमं सर्वेषामपि भ्रमाणां वेधसा निर्माणेपि प्राधान्य विवक्षयेत्थमभिधानं अयमास्तइत्युदाहरणेशंभुसादृश्यंगम्यमानमिहत्वनासक्तिरूपंतदुपात्तमितिभेदः त्वय्यागतइति राजानंप्रतिकवेरुक्तिः सेतुश्च मंथश्चेति

वेधाद्वेधाभ्रमंचक्रेकांतासुकनकेषुच तासुतेष्वप्यनासक्तःसाक्षाद्भर्गोनराकृतिः अत्रसाक्षादिति विशेषणे
नविरक्तस्यप्रसिद्धशिवतादात्म्यमुपदिश्यनराकृतिरितिदिव्यमूर्तिवैकल्यप्रतिपादनान्न्यूनाभेदरूपकं त्वय्या
गतेकिमितिवेपतएषसिंधुस्त्वंसेतुमंथकृद्दलः किमसौबिभेति द्वीपांतरेपिनहितेस्यवत्रांवदोद्यत्वांराजपुंग
वनिषेवतएवलक्ष्मीः अत्रत्वंसेतुमंथकृदितिसेतोर्मंथनस्यचकर्त्रापुरुषोत्तमेनसहवर्णनीयस्यतादात्म्य
मुक्त्वातथापित्वदागमनंसेतुबंधायमंथनायवेतिसमुद्रेणनभेतव्यंद्वीपांतराणामपित्वद्वशंवदत्वेनपूर्वव
द्वीपांतरेजेतव्याभावात्तासलक्ष्मीकत्वेनमंथनप्रसक्त्यभावाच्चेतिपूर्वावस्थातउत्कर्षविभावनादधिकाभेदरूपकं

द्वंद्वः मंथनंमंथः अमृतमथनं द्वीपांतरेपीत्यपिनासुतरामेतदुद्दीपनमाभीतिसूच्यते अघराजभावावस्थायां शंभुर्विश्वमित्यत्रविश्वसंरक्षकत्वंसादृश्य
मुपात्तं इहतुनेतिभेदः ❦ ❦ ❦ ❦

किंपद्मस्येति दयितांप्रतिनायकोक्तिः तववक्त्ररूपेइंदुकार्यकारिणिसति अयमपरः प्रसिद्धः शीतांशुश्चंद्रः यत् उज्जृंभते उदितो भवति तस्मात्तव वक्त्रेंदुः प
द्मस्यरुचिंकांतिंकिंनहंति प्रयोजनमनुद्दिश्यनमंदोपिप्रवर्तत इतिन्यायात् प्रयोजनस्यान्यतः संभवेतदुज्जृंभणस्यासंगतेरिति किंनहंतीतिकाक्वा
पितुहंत्येवेतिपर्यवसानेतदुज्जृंभणंवृथेतिप्रतीतिपर्यवसानं एवमग्रिमवाक्ययोरपि झषोमकरः केतनंचिह्नमस्यतथाभूतस्यसमुद्रस्यकामस्यच

किंपद्मस्यरुचिंनहंतिनयनानंदंविधत्तेनकिंवृद्धिंवाझषकेतनस्यकुरुतेनालोकमात्रेणकिं वक्त्रेंदो
तवसत्ययंयदपरःशीतांशुरुज्जृंभतेदर्पस्स्यादमृतेनचेदिहतदप्यस्त्येवबिंबाधरे अत्रापरःशीतांशुरित्यनेन
वक्त्रेंदोः प्रसिद्धचंद्राद्भेदमाविष्कृत्यतस्यचप्रसिद्धचंद्रकार्यकारित्वमात्रप्रतिपादनेनोत्कर्षापकर्षयोरप्र
दर्शनादनुभयताद्रूप्यरूपकं

आलोकनमालोकः प्रकाशश्चतन्मात्रेण अमृतेनदर्पोभिमानः उज्जृंभणहेतुः स्याच्चेत् अयुक्तमेत
त् यतः इहवक्त्रेंदौ बिंबाधरेतदप्यस्त्येवेतिसमुचितपदाध्याहारेणयोजनीयं यच्छब्दस्योत्तरवाक्यगतत्वेनतच्छब्दाक्षेपक्षमत्वान्नतदनुपादानेपिन्यूनपदत्वदोषः
कार्यकारित्वमात्रेत्स्यनेनाभेदव्यावृत्तिः अस्यामुखेंदुनेत्यत्रकिंभिंदुनेतिपुनरुपादानमात्रंभेदविवक्षाज्ञापकंइहत्वपरशब्दस्याप्युपादानमितिविशेषः ७

अचतुर्वदनइति बादरायणोव्यासः भालेलोचनंयस्येतिव्यधिकरणत्वेपिगमकत्वाद्बहुव्रीहिः ननुहरावपरइति विशेषणात्तदंशेएवताद्रूप्यरूपकंस्यात् इतरांशेत्वभेदरूपकंमेवेत्याशंक्याह अत्रेति त्रिष्वपीति एकत्रानेकारोपरूपायांरूपकमालायामवैरूप्यायतात्पर्यग्राहकस्यैकत्रस्थितस्यापिसाधारण्यमेवोचितमितिभावः अयमेवचसाध्वीत्यादिपूर्वोदाहरणाद्विशेषः न्यूनरूपस्यचमत्कारित्वंपूर्वमुक्तंतद्दसंमत्वाद्दटयति इदमिति यदाहेत्यनंतरंसइति

अचतुर्वदनोब्रह्माद्विबाहुरपरोहरिः अभाललोचनःशंभुर्भगवान्बादरायणः अत्रहराबपरइति
विशेषणात्रिष्वपिताद्रूप्यमात्रविवक्षाविभाविता चतुर्वदनत्वादिवैकल्यंचोक्तमितिन्यूनताद्रूप्य
रूपकं इदंविशेषोक्त्युदाहरणमितिवामनमतं यदाह एकगुणहानौगुणसाम्यदार्ढ्यंविशेषोक्तिरिति

शेषः एकगुणहानौअभिहितायामितिशेषः गुणसाम्यदार्ढ्यं शेषगुणप्रयुक्तसाम्यायोगव्यवच्छेदः चतुर्वदनत्वाद्येकगुणव्यतिरेकस्यप्रमाणांतरसिद्धस्य पुनर्वचनंशेषगुणाभावपरिसंख्यार्थंपर्यवस्यतीतिभावः अत्रचरूपकप्रभेदत्वेनैवचमत्कारोपपत्तौनालंकारांतरत्वंन्यूनत्ववर्णनस्ययुक्तं सामग्रीकालीनकार्याभावस्यत्वलंकारांतरासंभिन्नस्यतद्दक्ष्यमाणंयुक्तमित्यस्वरसोमतमित्यनेनसूचितः ॐ ॐ ॐ

किमसुभिरिति जडंतिमूर्खदंजलमयसाधारणंचंद्रसंबोधनं ग्लपितैर्नष्टैरसुभिर्निमित्तभूतैर्भैमसुतायादमयंत्यामनःमयिनिमज्जतुनिलीयतामितिमन्यसे किमितिसोपहासकाकुः तेनमैवंमंस्थाइत्यर्थः अत्रहेतुमाह किलनिश्चितंममविबुधःपंडितःस्मरःतदर्थिकांसःप्राणनिर्गमकालीनमनःप्रवेशःअर्थोयस्यास्तांश्रुतिंनलमुखेंदुपरांमनःप्रवेशाधिकरणत्वेननलमुखचंद्रतात्पर्यवतीमाहेति अयंकलंकिनइत्युदाहरणेदोषशून्यत्वप्रयुक्तंशाब्दमाधिक्यं

किमसुभिर्ग्लपितैर्जडमन्यसेमयिनिमज्जतुभीमसुतामनः ममकिलश्रुतिमाहतदर्थिकांनलमुखेंदुपरांविबुधःस्मरः अत्रदमयंतीकृतचंद्रोपालंभेप्रसिद्धचंद्रेणनिर्याणकालिकमनःप्रवेशश्रुतितात्पर्यविषयः किंतुनलमुखचंद्रएवेतिततोस्याधिक्यप्रतिपादनादधिकताद्रूप्यरूपकं रूपकस्यसावयवत्वनिरवयत्वादिभेदप्रपंचनंतुचित्रमीमांसायांद्रष्टव्यं ७

इहतुगुणविशेषप्रयुक्तंगम्यमानंतदितिविशेषः सावयवत्वनिरवयवत्वादीति आदिनासमस्तवस्तुविषयत्वादिरूपेतत्प्रभेदानांपरंपरितत्वरूपभेदांतरस्यचपरिग्रहः तथाहि सावयवं निरवयवं परंपरितंचेतित्रिविधंरूपकंप्रत्येकंक्रमेणद्विविधं समस्तवस्तुविषयं एकदेशविवर्तिच केवलंमालाच श्लिष्टवाचकं अश्लिष्टवाचकंचेति श्लिष्टाश्लिष्टभेदयोःकेवलमालारूपत्वाभ्यामेवंचतुर्विधमित्यष्टौभेदाः तत्रज्योत्स्नाभस्मछुरणधवलाबिभ्रतीतारका

स्थीन्यंतर्धानव्यसनरसिकारात्रिकापालिकीयं दीपात्दीपंभ्रमतिदधतीचंद्रमुद्राकपालेन्यस्तं सिद्धांजनपरिमलं [illegible]
लिकीत्वारोपस्य प्रधानतयावयविनो ऽवयवरूपाणिज्योत्स्नाभस्मेत्यादिरूपकाणीतिसावयवत्वं समस्तस्यवस्तुनः [illegible]
व्यं प्रोढमौक्तिकरुचः पयोमुचांबिंदवः कुटजपुष्पबंधवः विद्युतांनभसिनाट्यमंडलेकुर्वतेस्मकुसुमांजलिं [illegible]
डलत्वारोपस्यावयवं भूतंविद्युतांनर्तकीत्वरूपणमार्थंनशाब्दमित्येकदेशो विशेषेणशाब्दतयावर्तनादेकदेश [illegible]
यतिगीतध्वनिषुयंत्सखींकांतोदंतंश्रुतमपिपुनःप्रश्नयतियत् अनिद्रंयच्चांतःस्वपितितदहोवेद्म्यभिनवां [illegible]
मित्यत्र प्रेमलतिकाचित्तमालारूपंनिरवयवं सौंदर्यस्यतरंगिणीतरुणिमोत्कर्षस्यहर्षोद्गमः कांतेःकार्मणकर्मनर्मरहस [illegible]
विधेरनवधिप्रावीण्यसाक्षात्क्रियाबाणाः पंचशिलीमुखस्यललनाचूडामणिःसाप्रियेत्यत्रचमालारूपंनिरवयवं [illegible]
कान्तितजगत्त्रयःस्तूयतेदेवसद्वंशमुक्तारत्नंनकैर्भवानित्यत्रवेणुकुलयोःश्लिष्टेनवंशपदेनकुलेवेणुत्वारोप [illegible]
श्लिष्टवाचकंकेवलंपरंपरितरूपकं विद्वन्मानसेत्यादावेतदेवमालारूपं चतुर्दशलोकवल्लिकंदइत्यत्राश्लिष्ट [illegible]
ज्वलस्याद्रत्यादावालानंजयकुंजरस्येत्यादौचाश्लिष्टवाचकंमालापरंपरितंचद्रष्टव्यं विस्तरभयान्नेहप्रपंच्यते [illegible]
रणं * ६५ ६५

परिणामंलक्षयति परिणामइति विषयिनिष्ठायाः प्रकृतकार्योपयोगितायाअवच्छेदिका विषयात्मतापरिणतिः परिणामः साचविषयतादात्म्याध्यवसा यविषयता एवंचविषयभेदस्यदविपर्ययिणोविवक्षणात् दृगभिन्नतान्नेननिस्वारसिकत्वबाधः ननुरूपकइवदर्शितभेदप्रतियोगितान्नेनत्यनुयोगि

परिणामः क्रियार्थश्चेद्विषयीविषयात्मना प्रसन्नेनदृगब्जेनवीक्षतेमदिरेक्षणा यत्रारोप्यमाणोवि षयीकिंचित्कार्योपयोगित्वेननिबध्यमानःस्वतस्तस्यतदुपयोगित्वासंभवात्प्रकृतात्मनापरिणमपेक्षतेत त्रपरिणामालंकारः अत्रोदाहरणंप्रसन्नेनेति अत्रहिअब्जस्य वीक्षणोपयोगित्वंनिबध्यतेनतुदृशः म यूरव्यंसकादित्वमाश्रित्य उत्तरपदार्थप्राधान्यात् ननु ... दृगब्जमिवेतिपूर्वपदप्राधा न्यमस्त्विति वाच्यं प्रसन्नेनेति सामान्यधर्मप्रयोगात् ... सामान्याप्रयोगइतितदप्रयोगप र्यायमितसमासानुशासनात् अब्जस्यवीक्षणोपयोगित्वंनस्वात्मनासंभवति अतस्तस्यप्रकृतदृगात्मता परिणामपेक्षणात्परिणामालंकारः

त्वमुखइतिरूपकादेदोबोध्यः

ऽं समासेष्युदाहरति तीर्त्वेति मुरारिनाटकगतमेतत्पद्यं आत्मना तृतीयः सीतालक्ष्मणसहित इति यावत् असौ प्रक्रांतो रामः भूतेशस्य शंभोर्मौलिमालारूपममरनदीं गंगां तीर्त्वा तस्मै नाविकाय गुहसंज्ञाय निषादपतये सौमित्रेर्लक्ष्मणस्य मैत्रीरूपमानरं तरण्णमूल्यमुपकृतवान् उपकाररूपतयाद

यथा वा तीर्त्वा भूतेशमौलिस्रजममरधुनीमात्मनासौ तृतीयस्तस्मै सौमित्रिमैत्रीमयमुपकृतवानातरं नाविकाय व्यामग्राह्यस्तनीभिः शबरयुवतिभिः कौतुकोदंचदक्षं कृच्छ्रादन्वीयमानः क्षणमचलमथो चित्रकूटं प्रतस्थे अत्रारोप्यमाण आतरः सौमित्रिमैत्रीरूपतापत्त्या गुहोपकारलक्षणकार्योपयोगी तस्यात्मना गुहस्य रघुनाथप्रसादैकार्थित्वेन वेतनार्थित्वाभावादिति परिणामालंकारः ६

तवान् अथो अनंतरं चित्रकूटं प्रति प्रतस्थे प्रस्थितवान् कीदृशः व्यामेन तिर्यक्प्रसारित भुजद्वयांतरालेन ग्राह्यौ नावलपरिणाहौ स्तनौ यासां तथाभूताभिः शबराणां व्याधानां युवतिभिः कौतुकेनोदंचंति विकसंत्यक्षीणि यत्र क्रियायां तथा कृच्छ्रात्कृत्रादनग्वक्षणमन्वीयमानोऽनुगम्यमान इत्यर्थः ६

... रिणामप्रकरणं

उदाहरणांतरमाह यथावेति श्रीकृष्णस्य मथुराप्रवेशवर्णनं शौरिः श्रीकृष्णः वृद्धाभिर्जगत्त्रातेति दृष्ट इत्याद्यन्वयाः सकौतुकंसोत्कंठमिति दर्शनक्रि
या विशेषणं सर्वत्र संबध्यते श्लोकं व्याचष्टे यइति तथा महाग्राहग्रहणेन युवतिसमूहैः तरुणीसमूहैः पूर्वमिति उदाहृत इतिशेषः उल्लेख इत्यनुष-
ज्यते आरोपरूपकसंकीर्ण इति पाठे आरोपस्वरूपं यद्रूपकं तत्संकीर्ण इत्यर्थः आरोपरूपरूपकेति पाठस्तु स्पष्टार्थ एव उल्लेखप्रभेदांतरमाह एकेने

यथा वा गजत्रातेति वृद्धाभिः श्रीकांत इति योषितैः यथास्थितश्च बालाभिर्दृष्टः शौरिः सकौतुकं अत्र यस्तथा भीतं भक्तं गजं त्वरया त्रायते
स्म सोयमादिपुरुषोत्तम इति वृद्धाभिः संसारभीत्या तदभयार्थिनीभिः कृष्णोयं मथुरापुरं प्रविशन् दृष्टः यस्तथा चंचलत्वेन प्रसिद्धायाः श्रियोऽ
पि कामोपचारवैदग्ध्येन नित्यं वल्लभः सोयं दिव्ययुवेति युवतिसमूहैः सोत्कंठैर्दृष्टः बालाभिस्तद्वात्यगतरूपवेषालंकारदर्शनमात्रलाल
साभिर्यथास्थितवेषादियुक्तो दृष्ट इति बहुधोल्लेखः पूर्वः कामत्वाद्यारोपरूपकसंकीर्णः अयंतु शुद्ध इति भेदः एकेन बहुधोल्लेखेप्यसौ वि
षयभेदतः गुरुर्वचस्यर्जुनोयं कीर्तौ भीष्मः शरासने ग्रहीतृभेदाभावेपि विषयभेदाद्बहुधोल्लेखनादसावुल्लेखः उदाहरणं श्लेषसंकीर्णं वचो
विषये महान्पटुरित्यादिवत् बृहस्पतिरित्याद्यर्थांतरस्यापि क्रोडीकरणात् शुद्धो यथा ति व्याचष्टे ग्रहीत्रिति विषयभेदादित्यनंतरमेकस्येति शे
षः विषयपदमाश्रयसंबंधिनोरुपलक्षणं अत एव लक्षणे ग्रहीतृविषयादीत्यादिपदेन तत्संग्रहः कृतः तत्र विषयसप्तमीनिर्दिष्टो विषय इत्युच्यते

अधिकरणंसप्तमीनिर्दिष्टस्त्वाश्रयः षष्ठ्यादिनिर्दिष्टःसंबंधीतिविवेकः गुरुरित्यस्यार्थकथनंमहानिति गुरुर्महतिवाच्यवदितिविश्वकोशात् पटु रितितुतसर्यवसितार्थकथनं पटुर्दक्षइत्यादीत्यादिनाकीर्तिविषयेऽर्जुनोधवलइतिवत्सार्थइत्यर्थांतरस्यधनुर्विषयेभीष्मोभीषणइतिवद्गांगेयइत्य र्थांतरस्यन्दसंग्रहः भीष्मस्तुभीषणेरुद्रेगांगेयेचनिशाचरइतिविश्वः क्रोडीकरणात् एकवृंतगतफलद्वयन्यायेनसंग्रहात् अकृशमिति कपा लिनोहरस्यभागधेयंभाग्यंतत्त्वेनाध्यवसितंपार्वतीस्वरूपंचित्तेआविरस्तुप्रकटीभवत्वितिसंबंधः किंभूतंकुचयोःकुचविषयेअकृशंस्थूलं एव

अकृशंकुचयोःकृशंविलग्नेविपुलंचक्षुषिविस्तृतंनितंबे
अधरेरुणमाविरस्तुचित्तेकरुणाशालिकपालिभागधेयं

मध्येपिविलग्नोमध्यः विलग्नोमध्यलग्नयोरितिविश्वः विपुलं आयतं अधरेअधरोष्ठे अरुणमारक्तं अरुणाधरमितिपाठस्तुप्रक्रमभंगादयुक्तः चित्तेइतिकरुणाशालीत्यत्रापिमध्यमणिन्यायेनसंबध्यते एवंतुषारास्त्रापसन्नातेतामसेषुचतापिनः दृगंतारस्ताडकाशत्रोर्भूयासुर्ममभूतयइत्याद्य वधिकरणानेकत्वप्रयुक्तः यमःप्रतिमहीभृतांकृतवहोसितन्नीवृतांसतांखलुयुधिष्ठिरोधनपतिर्धनाकांक्षिणां गृहंशरणमिच्छतांकुलिशकोटिभिर्निर्मितं त्वमेकइहभूतलेबहुविधोविधात्राकृतइत्यादौसंबंधिभेदप्रयुक्तश्चोल्लेखोद्रष्टव्यइतिदिक्

इत्यलंकारचंद्रिकायामुल्लेखप्रकरणं

अथज्ञानप्राधान्यसाम्यात्स्मृत्यादिमदलंकारानाह स्यादिति स्मृतिभ्रांतिसंदेहैर्व्यवहर्तव्यतयाहेतुभूतैस्तदंकं तेषामंकस्तदंकः तदंकोविद्यतेअस्मिन्तथाभूतं मत्वर्थीयात्प्रत्ययात् अंकश्चिह्नंसंज्ञेतियावत् तेनतत्संज्ञामंङ्कितमित्यर्थः अलंकृतित्रयंव्यवहारविषयःस्यादितियोजना एवंचस्मृतित्वभ्रांतित्वसंदेहत्वानित्रीणिलक्षणानि तत्रस्मृतित्वंनावस्मरामीत्यनुभवसाक्षिकोजातिविशेषः भ्रांतित्वंविशेष्यावृत्तिप्रकारकज्ञानत्वं संदेहत्वंतुनिश्चयभिन्नत्वेसतिसंभावनाभिन्नज्ञानत्वंपारिभाषिकं स्मृतिभ्रांत्यादिवारणायसत्यंतं उत्प्रेक्षावारणायसंभावनाभिन्नेति चमत्कारित्वं

स्यात्स्मृतिभ्रांतिसंदेहैस्तदंकालंकृतित्रयं पंकजंपश्यतःकांतामुखंमेगाहतेमनः अयंप्रमत्तमधुपस्त्वन्मुखंवेत्तिपंकजं पंकजंवासुधांशुर्वेत्यस्माकंतुनर्निर्णयः स्मृतिभ्रांतिसंदेहैःसादृश्यान्निबध्यमानैःस्मृतिमान्भ्रांतिमान्ससंदेहइतिस्मृत्यादिपदांकितमलंकारत्रयंभवति तच्चक्रमेणोदाहृतं

पुनरखिलालंकारसाधारणंलक्षणत्रयेपिनिवेशनीयं तेनसघटइतिस्मृताविदंरजतमितिभ्रांतावयंस्थाणुःपुरुषोवेतिसंशयेनातिप्रसंगइतिध्येयं गाहतेआकलयतिस्मरतीतियावत् सादृश्यान्निबध्यमानैरितिचमत्कारित्वोपलक्षकं नत्वेतस्यापिस्वातंत्र्येणलक्षणेप्रवेशः सादृश्यामूलकानामपिस्मृत्यादीनांचमत्कारित्वेऽलंकारतायाअनिवार्यत्वात् चमत्कारित्वैकजीवातुत्वात्तस्याःअचमत्कारित्वेतुतेनैववारणमितिव्यर्थंसादृश्यहेतुकत्वविशेषणं नचैतदेवोपादीयतांनतुचमत्कारित्वविशेषणमितिवाच्यं उदाहृतेषुसादृ-

श्रयमूलकं स्मृत्यादिष्वतिप्रसंगवारणार्थं तस्यावश्यकत्वादिति संक्षेपः  दिव्यानामिति  माघे जलक्रीडावर्णनप्रस्तावे पद्यमिदं शौरिः श्रीकृष्णः अंभस्तःज
लात् उत्तरंतीं निर्गच्छंतीं श्रियमिव श्रीसदृशीं कांचित्पुरस्तादग्रे उद्वीक्ष्य जलनिधिमंथनस्य अस्मार्षीत् स्मृतवान् अधीगर्थेति कर्मणि षष्ठी किंभूतां दिविभवा
दिव्यास्तेषां देवानामपि सौंदर्यातिशयेन कृताश्चर्यां तथा स्फुरता अरविंदेन कमलेन चारुः रमणीयः हस्तो यस्यास्तथाभूतां तथाचैवं विधनायिकासदृश
लक्ष्मीस्मरणात्तत्संबंधिजलनिधिमंथनस्मरणमिति भावः  अत्र श्रियमिवेत्युपमायाः स्मृत्यंगत्वात्तयोरंगांगित्वलक्षणः संकरः  पलाशेति  यद्विकमलेहि

यथावा  दिव्यानामपि कृतविस्मयां पुरस्तादंभस्तः स्फुरदरविंदचारुहस्तां  उद्वीक्ष्य श्रियमिव कांचिदुत्तरंतीमस्मार्षीज्जलनिधिमंथनस्य शौ
रिः  पूर्वत्र स्मृतिमदुदाहरणे सदृशस्यैव स्मृतिरत्र सदृशलक्ष्मीस्मृतिपूर्वकं तत्संबंधिनो जलनिधिमंथनस्यापि स्मृतिरिति भेदः  पलाशमुकुल
भ्रांत्या शुकतुंडे पतत्यलिः  सोपि जंबूफलभ्रांत्या तमलिं धर्तुमिच्छति  अत्रान्योन्यविषयभ्रांतिनिबंधनः पूर्वोदाहरणाद्विशेषः  जीवनग्रहणे नम्रा
गृहीत्वा पुनरुन्नताः  किं कनिष्ठाः किमु ज्येष्ठा घटीयंत्रस्य दुर्जनाः  पूर्वोदाहृतसंदेहः प्रसिद्धकोटिकः अयं तु कल्पितकोटिक इति भेदः  स्वरूपसादृ

श्यात् भ्रांतिः  अलिः भ्रमरः सोपि शुकोपि भ्रांतिनिबंधन इति भ्रांतिप्रयुक्त इत्यर्थः  जीवनेति जीवनं जलं प्राणसंयोगश्च अथवा जीवंतेनेनेति जीवनं धनं नम्रा अ
धोमुखाः  विनीताश्च उन्नताः ऊर्ध्वमुखाः उद्धताश्च घटीयंत्रं एकरज्जुसंबद्धघटमालारूपं भाषायां रहट इति प्रसिद्धं  अप्रसिद्धेति  घटीयंत्रसंबंधिनोर्ध्वमुकानि
म्नयोः कोद्भुतः प्रसिद्धेरिति भावः  इत्यलंकारचंद्रिकायां स्मृतिभ्रांतिसंदेहप्रकरणं  ७

अथापह्नुतिः तत्र तावदभेदप्रतिपत्तिनिरूपितांगांगित्वान्यतरवान्निषेधोऽपह्नुतिरित्यपह्नुतिसामान्यलक्षणं निषेधश्च नञादिभिः [illegible] क्वचित्
नदभावात्केनचादिशब्दैः [illegible] तथा क्वचिदनदभेदप्रतिपत्तिसमानाधिकरणः क्वचित्तु न तथा व्यधिकरण इति विवेकः [illegible]
कश्चिदारोप्यमाणः कश्चित्तु [illegible] विकल्पएव [illegible] प्रतिपत्तिनिरूपिकश्चित् व्यंजनया भाग्यशब्दवाच्यवृत्त्येतिबोध्यं निषेधोऽपह्नुतिरित्येतावदुक्तौ न धूतं
तत्किं न चक्रीडनं [illegible] निर्माणाद्यनिषेधानुवादरूपे प्रतिषेधालंकारेतिव्याप्तिरतोऽभेदप्रतिपत्तिनिरूपितेत्यादिविशेषणमुपात्तं तत्रहि युद्ध
प्रवृत्तं किंतु [illegible] प्रतियुद्धं द्यूतं त्वा [illegible] वानिर्जितोऽधिक [illegible] मानो द्यूतएव तव प्रागल्भ्यं न तु युद्ध इत्युपहासार्थो न तु युद्धाभेदप्रतिपत्त्यंगं तस्यानुपपत्त्या

शुद्धापह्नुतिरन्यस्यारोपार्थो धर्मनिह्नवः नायंसुधांशुः किंतर्हि व्योमगंगासरोरुहं

विनापि सिद्धत्वात् नाप्यंगिभूतः निर्णीतत्वेन तदुपायानपेक्षणादिति तद्वारणं अभेदप्रतिपत्तिनिरूपितांगित्वमात्रोक्तौ शुद्धापह्नुतिहेत्वपह्नुतिपर्यस्ता
पह्नुतिकैतवापह्नुतिष्वव्याप्तिः तत्र सर्वत्र नायं सुधांशुरित्यादेर्निषेधस्य व्योमगंगासरोरुहाद्यभेदप्रतिपत्त्यर्थत्वेन तदंगतया अंगित्वाभावात् अभेदप्रति
पत्तिनिरूपितांगत्वमात्रोक्तौ च भ्रांतापह्नुतिछेकापह्नुत्योरव्याप्तिः तयोर्भ्रांतिशंकानिवारणरूपनिषेधस्य प्राधान्येनाभेदप्रतिपत्त्यंगत्वाभावात् तत्तदन्यतरत्व
निवेशः तदाहुः साम्यादापह्नवो यत्र सा विज्ञेयापह्नुतिः अपह्नवायसादृश्यं यस्मिन्नेषाप्यपह्नुतिरिति सर्वं चैतत्तत्तदुदाहरणव्याख्यानावसरे व्यक्ती
भविष्यतीति न प्रपंचितं एवं सामान्यलक्षणं मनसि निधाय शुद्धापह्नुत्यादीन्लक्ष्यदानकुमुपक्रमते शुद्धापह्नुतिरिति ६

लक्षणंव्यांग्वष्टे वर्णनीयइति कविमतेर्विकासः स्फूर्तिशालितानथाचोपमेयेउपमानारोपफलकउपमेयधर्मत्वाभिमतनिषेधः शुद्धापह्नुतिरितिलक्षणमितिभावः अत्रैचानुक्तनिमित्तत्वंकेतवादिपदाव्यंग्यत्वंचनिषेधविशेषणबोध्यं तेनहेलपह्नुतौकैतवापह्नुतौचनातिप्रसंगः कांतःकिंनहिनूपुरइतिछेकापह्नुतौउपमेयधर्मस्यकांतत्वस्यनिषेधसत्वादितिप्रसंगवारणायाद्यंविशेषणं नत्रहिनकांतत्वनिषेधोनूपुरारोपार्थोऽपि

वर्णनीयेवस्तुनितत्सदृशधर्मारोपफलकस्तदीयधर्मनिह्नवः कविमतिविकासोत्प्रेक्षितधर्मांतरस्यापिनिह्नवःशुद्धापह्नुतिः यथाचंद्रेवियन्नदीपुंडरीकत्वारोपफलकस्तदीयधर्मस्यचंद्रत्वस्यापह्नवः

तुनूपुरारोपएवत्रांकिंनकांतत्वनिषेधार्थइतितद्व्यावृत्तिः पर्यस्तापह्नुतिवारणायोपमेयधर्मेत्युक्तंनत्रोपमानधर्मस्यैवसुधांशुत्वादेर्निषेधइतिनातिव्याप्तिरितिसर्वसुस्थं पुंडरीकेति पुंडरीकंसितांभोजमित्यमरः इवंचसरोरुहपदंविशेषपरमितिभावः ५

नचचंद्रेचंद्रत्वनिषेधस्यकथंमुखेतदारोपार्थत्वमितिवाच्यं आरोपदार्ढ्यसंपादकत्वेननिषेधस्यतदर्थताया अनुभवसिद्धत्वात् अतएववद्दारोपरूपकमेवेदंनापह्नुतिरितिप्राचांसिद्धांतस्तदनुसारेणेवचचित्रमीमांसायांप्रकृतस्यनिषेधेनयदन्यत्वप्रकल्पनमित्यपह्नुतिलक्षणमुक्तं इहत्वलंकाररत्नाकराद्यनुसारेणायंप्रभेदउपदर्शितसामान्यलक्षणाभिप्रायेणापह्नुतित्वेनोक्तइतिनिरवद्यं हालाहलइति हालाहलोविषंनैवभवतिकिंतुरमालक्ष्मीर्विषं जनाःपरंकेवलमत्रास्मिन्विषयेव्यत्ययंवैपरीत्यंमन्वतेअभ्युपगछंति कुतस्तत्राह यस्मात्तुशिवस्तंहालाहलंनिपीयसुखेनजागर्ति

यथाचंद्रेचंद्रत्वनिह्नवोवर्णनीयेमुखेतदारोपार्थः यथावा हालाहलोनैवविषंविषंरमाजनाःपरंव्यत्ययमत्रमन्वते निपीयजागर्तिसुखेनतंशिवःस्पृशन्निमांमुह्यतिनिद्रयाहरिः पूर्वोदाहरणेहेतूक्तिर्नास्तिअत्रतुसास्तीतिविशेषः ततश्चपूर्वापह्नुतिवदत्रापिद्वैविध्यमपिद्रष्टव्यं

हरिस्तुइमांरमांस्पृशन्सन्निद्रयामुह्यति स्मरन्नितिपाठेस्मरन्नपिमुह्यतिकिमुस्पृशन्नित्यर्थः तथाचरमायाविषरूपत्वेमोहजनकत्वंहेतुः हालाहलस्यतुत्वापकत्वेचजागरसुखप्रयोजकत्वमितिबोध्यं हालाहलोविषेइतिविश्वः अत्रस्पृशन्मुह्यतीतिकार्यकारणयोःपौर्वापर्यविपर्ययरूपातिशयोक्तिरलंकारःसाहेतूक्तिः ततश्चेति हेतूक्तितदनुक्तिरूपभेदादित्यर्थः पूर्वापह्नुतिवत् शुद्धापह्नुतिवत् द्वैविध्यं शुद्धपर्यस्तापह्नुतिःहेतुपर्यस्तापह्नुतिरित्येवंद्विप्रकारत्वं ७

भ्रांतापह्नुतिरिति अन्यस्य प्रकृतस्य भ्रांतिवारणेवार्यतेऽनेनेतिवारणं तथाचभ्रांतिवारकेतत्त्वाख्यानेसतीत्यर्थः भ्रांतंभ्रमः भावेक्तः भ्रांत्यपह्नुतिरि त्यर्थः एवंचतत्त्वकथनहेतुकभ्रांतिविषयनिषेधोभ्रांतापह्नुतिरितिलक्षणंबोध्यं तस्य तापकारित्वरूपस्मरवृत्तांतस्य नागरिकेति नगरेभवोनागरिक स्तंप्रतिग्रामीणस्यप्रश्नः समधिकापश्वंतरेभ्यः उन्नतिरुच्चता यस्येवंभूतउभयतःमुखपृष्ठभागयोःपुच्छंयस्यैवंभूतश्चकोयं महिषइति नहिनहि

भ्रांतापह्नुतिरन्यस्यशंकायांभ्रांतिवारणे तापंकरोतिसोत्कंपंज्वरःकिंनसखिस्मरः अत्रतापंकरोतीतिस्मरवृत्तांतेकथितेत स्यज्वरसाधारण्याद्वजुबुध्यासख्याज्वरःकिमितिपृष्टेनसखिस्मरइतिनत्वोक्त्याभ्रांतिवारणंकृतं यथावा नागरिकसमधिकोन्न तिरिहमहिषःकोयमुभयतःपुच्छः नहिनहिकरिकलभोयंशुंडादंडोयमस्यनतुपुच्छं इदंसंभवद्भ्रांतिपूर्विकायांभ्रांतापह्नुतावुदा हरणं

स्युत्तरंमहिषइत्यनुषज्यते अयंकरिकलभः करिशावकः कलभःकरिशावकइतिकोशात्कलभइत्येतावतैवसि द्धेकरिपदमुत्कृष्टकरिबोधार्थं अयमस्यशुंडादंडोनतुपुच्छमिति पुच्छइतिपाठोप्यर्द्धर्चादित्वात्साधुरेव अप्रयुक्तत्वंतुतत्रपरंविचार्यमिति पूर्वोदाहरणेसं देहरूपभ्रांतिविषयज्वरत्वापह्नवःज्वरःकिमितिप्रश्नेनतद्विषयसंदेहावगमात् इहतुमहिषत्वनिश्चयरूपभ्रांतिविषयस्यमहिषत्वस्येतिततोभेदः ७

जटेति विरहिण्या इयमुक्तिः [illegible] नर्त्तंस्य भ्रांत्या मां किं कुतः प्रहरसि यतो नेयं जटा किंतु वेणीकृतः अवेणीवर्णास्सं
पघनेन तथा कृतः कचानां कला [illegible] इयं कस्तूरी एवं शिरसि नैषा शशिलेखा किंतु कुसुमं तथा इयमंगे भूतिर्भस्म न भवति
परंतु प्रियविरहाज्जन्म यस्य एवं भूतं धवलिमा पांडिमेति अहर्ज्यो दकुत्री हिर्व्यधिकरणो जन्माद्युत्तरपद इति वामनसूत्राद्यधिकरणोपि वकुव्री

कल्पितभ्रांतिपूर्वा यथा जटा नेयं वेणीकृतकचकलापा न गरलं गले कस्तूरीयं शिरसि शशिलेखा न कुसुमं
इयं भूतिर्नांगे प्रियविरहजन्मा धवलिमा पुरारातिभ्रांत्या कुसुमशर किं मां प्रहरसि अत्र कल्पितभ्रांतिर्ज
टानेयमित्यादिनिषेधमात्रोन्नेया पूर्ववत्प्रभ्राभावान् दंडीतत्र तत्त्वाख्यानोपमेत्युपमाभेदं मेने यदाह
न पद्मं मुखमेवेदं न भृंगौ चक्षुषी इमे इति विस्पष्टसादृश्यात्तत्त्वाख्यानोपमामतेति ६९ ६९

हिर्नदुष्टः कल्पितेति कुसुमशरे उत्प्रेक्षितेत्यर्थः निषेधमात्रोन्नेयेति निषेधस्य प्रसक्तिपूर्वकत्वादिति भावः मेने इत्यस्वरसोद्भावनं तद्बीजं तूपमा
बोधकस्येवादेरसत्वेपि तदुपगमे रूपकस्याप्युपमात्वं स्यादिति स्पष्टमेव ॥ ६९ ६९ ६९

छेकापह्नुतिरिति छेकोविदग्धस्तस्या अपह्नुतिः छेकापह्नुतिरितिलक्ष्यनिर्देशः वाक्यान्यथायोजनहेतुकः शंकितनात्त्विकवस्तुनिषेधइतिल
क्षणं अन्यस्यशंका स इत्यन्यशंकायानिवर्त्तनीयत्वेनहेतुतयाव्यपदेशः संतापात्स्नातीतिवत् अत्रचशुद्धापह्नुतिवारणायाद्यंविशेषणंम
मकिलश्रुतिमाहंतदर्थिकामित्यधिकताद्रूप्यरूपकवारणायशंकितेति नचानेनैवशुद्धापह्नुतिवारणाद्वाक्येत्यादिव्यर्थमितिवाच्यं कस्य
वानभवेद्रोषः प्रियायासव्रणेधरे सभृंगंपद्ममाघ्रासीर्वारितापिमयाधुनेतिव्याजोक्तावतिप्रसंगवारकत्वेनतत्सार्थक्यात् यद्वक्ष्यति छेकाप

छेकापह्नुतिरन्यस्यशंकातस्तथ्यनिह्नवे प्रजल्पन्मत्पदेलग्नः कांतः किंनहिनूपुरः कस्यचित्कंचिदतिरहस्योक्तावन्ये
नश्रुतायामुक्तेस्तात्पर्यनिरवर्णनेनतथ्यनिह्नवे छेकापह्नुतिः यथानायिकयानर्मसखींप्रतिप्रजल्पन्मत्पदेलग्न इतिस्वना
यकवृत्तांतेनिगद्यमानेतदाकर्ण्यकांतः किमितिशंकितवतींअन्यांप्रतिनूपुरइतिनिह्नवः

ह्नुतेरस्याश्चायंविशेषो यत्तस्यांवचन
स्यान्यथानयनेनापह्नवः अस्यामाकारस्यहेत्वंनरवर्णनेनगोपनमिति तथ्यनिह्नवइति तात्विकनिषेधेइत्यर्थः नूपुरोमंजीरः मंजीरो
नूपुरोऽस्त्रियामित्यमरः नर्मसखी क्रीडासखी अत्रकांतपरायाः प्रजल्पन्मत्पदेलग्नइत्युक्तेर्नूपुर तात्पर्यकत्ववर्णनेनकांतत्वापह्नवो
मुख्यः नूपुराभेदप्रतितिस्तुतदंगमितिबोध्यं ॥

आबद्धेति आबद्धाः याः कृत्रिमाः सटाः स्कंधलोमानि ताभिर्जटिला व्याप्ता अंसभित्तिः स्कंधदेशो यस्य स एवंभूतः श्वा शुनकः मृगपतेः सिंहस्य पदवीं स्थानं यद्यारोपितः तादृशसटायुक्तत्वेन सिंहसाम्यं प्रापित इत्यर्थः तथापि मत्तानामिभानां गजानां कुंभतटस्य पाटने विदारणे लंपटस्य व्यसनिनो हरिणानामधिपस्य नादं सिंहनादं कथं करिष्यतीत्यर्थः अभिनयवत्ति अनुकुर्वतीति सम्बन्धः वैधेये मूर्खे मूर्खवैधेयबालिशा इत्यमरः

यथावा आबद्धकृत्रिमसटाजटिलांसभित्तिरारोपितो मृगपतेः पदवीं यदि श्वा मत्तेभकुंभतटपाटनलंपटस्य नादं करिष्यति कथं हरिणाधिपस्य अत्र शुनकस्य निंदा निंदनीयत्वेन प्रस्तुते तत्स्वरूपे कृत्रिमवेषव्यवहारादिमात्रेण विद्वत्ताभिनयवति वैधेये पर्यवस्यति यथावा अंतश्छिद्राणि भूयांसि कंटका बहवो बहिः कथं कमलनालस्य माभूवन् भंगुरा गुणाः अत्र कमलनालवृत्तांतकीर्तनं तत्स्वरूपे बहिः खलेषु जायत्सु भ्रातृपुत्रादिभिरंतः कलहं कुर्वाणे पुरुषे पर्यवस्यति

अंतरिति छिद्राणि रंध्राणि दोषस्थानानि च कंटकाः शूकाः खलाश्च भंगुराः भंगशीलाः गुणाः सौभाग्यादयः तंतवश्च अत्र स्तुतिनिंदोदासीनस्वरूपाख्यानमात्रमिति श्लिष्टविशेषणलभितस्त्रिभेदः ❋ ६१ ६१ ६१

एवंचेति उक्तोदाहरणेषुप्रस्तुतपरस्याप्रस्तुतवर्णनस्यत्रिरूपत्वेसतीत्यर्थः विधायेति येनराः मनुष्याः सक्रोधेऽरौशत्रौवैरंविधायोदासीनाभवं
तितेकक्षेतृणेउदर्चिषमग्निंनिक्षिप्यअभिमारुतंपवनाभिमुखंशेरतेनिद्रांकुर्वंतीत्यर्थः सौहार्देति सौहार्दनिभेत्याण्येवस्वर्णरेखाइतिरूपकं

एवंचलक्ष्यलक्षणयोःप्रशंसाशब्दःस्तुतिनिंदास्वरूपाख्यानसाधारणकीर्तनमात्रपरोद्रष्टव्यः सामान्य
निबंधनायथा विधायवैरंसामर्षेनरोऽरौयउदासते प्रक्षिप्योदर्चिषंकक्षेशेरतेऽभिमारुतं अत्रप्रागे
वसामर्षशिशुपालरुक्मिणीहरणाद्वैरंदृढीकृतवताकृष्णनतस्मिन्नुदासितुमयुक्तमितिवक्तव्येऽर्थप्रस्तु
तेतत्प्रत्यायनार्थंसामान्यमभिहितं यथावा सौहार्दस्वर्णरेखाणामुच्चावचभिदाजुषां परोक्षमितिकोप्य
स्तिपरीक्षानिकषोपलः अत्रयदितंप्रत्यक्षमिवपरोक्षेपिममहितमाचरसितदात्वमुत्तमःसुहृदितिवि
शेषेवक्तव्यत्वेनप्रस्तुतसामान्यमभिहितं

तासांपरीक्षणेनिकषोपलः परोक्षमितिसंज्ञितः कोप्यस्तीत्यन्वयः

विशेषनिबंधना यथा अंकाधिरोपितमृगश्चंद्रमा मृगलांछनः केसरी निष्ठुरक्षिप्तमृगयूथो मृगाधिपः अत्र कृष्णं प्रति बलभद्रवाक्ये मार्दवदूषणपरे पूर्वप्रस्तावानुसारेण क्रूर एव ख्याति भाग्भवति न तु मृदुरिति सामान्ये वक्तव्ये तत्प्रसाधनार्थं मप्रस्तुतो विशेषोभिहितः एवं बृहत्कथादिषु सामान्यतः कंचिदर्थं प्रस्तुत्य तद्विवरणार्थमप्रस्तुतकथाविशेषोदाहरणेष्वियमेवाप्रस्तुतप्रशंसा द्रष्टव्या कारणनिबंधना यथा हृतसारमिवेंदुमंडलं दमयंतीवदनाय वेधसा कृतमध्यबिलं विलोक्यते धृतगंभीरखनीखनीलिम अत्राप्राकरणिकेंदुमंडलगततया प्रेक्ष्यमाणेन दमयंतीवदननिर्माणार्थसारांशहरणेन तत्कार्यरूपं वर्णनीयतया प्रस्तुतं दमयंतीवदनगतलोकोत्तरसौंदर्यं प्रतीयते ॰

भीरा यां खन्यां गर्ते खस्याकाशस्य नीलिमा येनेति मंडलविशेषणम् ६९

आश्रित्येति हे देव प्रतिमासंभिन्ना अमृतद्युतयश्चंद्रास्ते विष्णोः परमाकाशमेव पदं चरणमाश्रित्य देहस्य क्षये उपनतं संपन्नं दिव्यपदस्याभिमुख्यं
येषामेवंभूताः संतस्त्वदास्यरूपे सुहृदिमित्रे नूनं लावण्यस्वरूपस्य पुण्यस्य निचयं विन्यस्य मिहिरं सूर्यं प्रतियांतीत्यन्वयः मंत्रलिंगादिति नवोनवो

यथावा मदीयवरदराजस्तवे आश्रित्य नूनममृतद्युतयः पदं ते देहक्षयोपनतदिव्यपदाभिमुख्याः लावण्यपुण्य
निचयं सुहृदि त्वदास्ये विन्यस्य यांति मिहिरं प्रतिमासभिन्नाः अत्र प्राकरणिकचंद्रकर्तृकतया लक्ष्यमाणेन लावण्य
पुण्यनिचयविन्यासेन कारणेन तत्कार्यमनंतकोटिचंद्रलावण्यशालित्वं अनन्यमुखसाधारणं भगवन्मुखे वर्ण
नीयतया प्रस्तुतं प्रतीयते तथाहि चंद्रस्तावन्मंत्रलिंगाद्वृद्धिक्षयाभ्यामभेदे पि भेदाध्यवसायाद्वा प्रतिमासंभिन्नत्वेन व
र्णितः तेनातीताश्चंद्रा अनंतकोटय इति लब्धं कालस्यानादित्वात्सर्वेषां च तेषामाकाशसमाश्रयणं श्लेषमहिम्ना
भगवच्चरणसमाश्रयत्वेनाध्यवसितं भगवच्चरणं प्रपन्नानां च देहक्षयोपस्थितौ परमपदप्राप्त्याभिमुख्यं तदा
नीमेव स्वसुहृद्वर्गे स्वकीयसुकृतस्तोमनिवेशनं ६९ - ६९ भवति जायमान इत्यादिमंत्रसामर्थ्यादित्य-
र्थः मंत्रस्य मानां नरसिद्धार्थानुवादकत्वादाह वृद्धीति ॥ ६९ ६९ ६९

श्रुनीति तत्सुकृतदुष्कृते विधूनुते नस्य प्रियाज्ञातयः सुकृतमुपयंति अप्रिया दुष्कृतमिति कौषीतकी श्रुतिः मयाक्षिप्यन्मनस्ता वदादित्यं गच्छतीति
स वायुमागच्छति स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्व आक्रमते स आदित्यमागच्छतीति च श्रुतौ स आदित्यमागच्छतीत्यनंतरं स आगच्छ

ततः सूर्यमंडलप्राप्तिश्चैत्येनतत्सर्वं श्रुतिसिद्धमिति तदनुरोधेन तेषां देहक्षयकालस्यामावास्यारूपस्योपस्थितौ सूर्यमंडलप्राप्तेः
प्राक्प्रत्यक्षसिद्धं पुण्यत्वेन निरूपितस्य लावण्यस्य प्रहाणं निमित्तीकृत्य तस्य चंद्रमाद्दयस्वरूपोपचरित तन्मोहार्दवति भगवन्मु
खे न्यसनमुत्प्रेक्षितं यद्यपि सुहृद्धृक्त्वेनावदल्पपुण्यसंक्रमो भवति तथापि अत्र सुहृदित्येकवचनेन भगवन्मुखमेवत्वं
इस्य सुहृद्भूतं तन्मुखं तरणित्वं इमाद्दश्यगंधस्यास्य दानीति भगवन्मुखस्येतरमुखेभ्यो व्यतिरेकोपि व्यंजितः ततश्च त
स्मिन्नेव सर्वेषां स्वस्वयावल्लावण्यविन्यसनोत्प्रेक्षणेन प्राग्वर्णितः प्रस्तुतोर्थः स्पष्टमेव प्रतीयते यद्यपि श्रुतौ सूर्यमंडलप्राप्त्य
नंतरभावि विरजानदीक्रमणानंतरमेव सुहृत्सुकृतसंक्रमणं श्रूयते तथापि शारीरकशास्त्रे तस्यार्थवशात्प्राग्भावः स्थापित इति
तदनुसारेण विन्यस्यमिहिरं प्रतियांतीत्युक्तं
ति विरजां नदीं तां मनसैवात्येति तत्सुकृतदुष्कृते विधूनुत इति श्रुतौ शारीरकेति शारीरभवः शारीरः स
एव शारीरक आत्मा तत्प्रतिपादके स्यर्थः अर्थवशात्प्रयोजनवशात् पूर्वपापादित्यागाभावे ऽर्चिरादिमार्गप्राप्तिपूर्वकब्रह्मप्राप्तेरसंभवेन पाठक्रमस्य आर्थक्र

मेणबाधादिति भावः स्थापितइति सांपरायेनर्तव्याभावात्तथात्वन्य इतिनानीयाधिकरणेसिद्धांतिनइत्यर्थः नाथेति हेनाथविष्णोत्वच्चरणनख
प्रक्षालनजलेगंगारूपेलग्नाः तेषांनखानांकांतिलेशकणिकाःसमुद्रंप्राप्ताः ताएवचकणिकास्तस्यजलधेर्मथनेनसांद्रतांप्राप्तानूनंसमुद्रसंबंधि

कार्यनिबंधनायथा नाथत्वदंघ्रिनखधावनतोयलग्नास्त्वत्कांतिलेशकणिकाजलधिंप्र
विष्टाः ताएवतस्यमथनेनघनीभवंत्योनूनंसमुद्रनवनीतपदंप्रपन्नाः भगवत्पादांबुजक्षा
लनरूपायांदिव्यसरित्यलक्तकरसादिवल्लग्नानांनयामहसमुद्रंप्रविष्टानांतत्नखकांतिलेश
कणिकानांपरिणामतयासंभाव्यमानेनसमुद्रनवनीतपदवाच्येनचंद्रेणकार्येणतन्नखकांत्युत्कर्षः
प्रतीयते यथावा

नवनीतस्यचंद्रस्यपदंप्राप्ताःचंद्ररूपेणपरिणताइत्यर्थः तयानद्वारेणतदित्यनंतरंहेतुरितिशेषः तद्धेतुर्नखकांत्युत्कर्षइत्यर्थः ::::

अस्याश्चेति अस्याः कामिन्या गतिसौकुमार्यं हृदयं चेदित्यध्याहारेणान्वयः एवं संलापो भाषणं यदि श्रुतस्तदा परभृतैः कोकिलैर्वाच्यं यच्छ्रुतमिति तथा तस्य भावो मौनमेव व्रतं साध्यतां अकठोरता मार्दवं यदि दृश्यते न तदा सा प्रसिद्धा मालती दृषत्प्रायैव पाषाणतुल्यैव लक्ष्यत इति कान्तिर्दृष्टा चे

अस्याश्चेद्गतिसौकुमार्यमधुना हंसस्य गर्वैरलं संलापो यदि धार्यतां परभृतैर्वाचंयमत्वव्रतं अंगानामकठोरता यदि दृषत्प्रायैव सा मालती कांतिश्चेत्कमला किमत्र बहुना काषायमालंबतां अत्र नायिकागतिसौकुमार्यादिषु वर्णनीयत्वेन प्रस्तुतेषु हंसादिगतगर्वशांत्यादिरूपाणि औचित्येन संभाव्यमानानि कार्याणि अभिहितानि एतानि च पूर्वोदाहरणद्वय न वस्तुकार्याणि किंतु तन्निरीक्षणकार्याणि ॥ ७ ७

सदा कमला लक्ष्मीः काषायं वस्त्रमालंबतामाश्रयतु किमत्र बहुनोक्तेनेत्यन्वयः गत्यादिषु गतिसौंदर्यादिषु संभाव्यमानानि उत्प्रेक्ष्यमाणानि पूर्वोदाहरणाद्वैलक्षण्यमाह एतानीति कार्याणीत्यर्थः ७ ७ ७

लज्जेति ॰तिरश्चां पश्वादीनां चेतसि यदि लज्जास्यात्तदा च मर्यः गोमृगाः पर्वतराजपुत्र्यास्तं तथा रमणीयं केशपाशं प्रसमीक्ष्य वालाः केशाः प्रियायास्तांस्तथा नत्वं शिथिलं कुर्युरित्यन्वयः॰ तथैव निरीक्षणकार्यत्वमेव अर्थाक्षेप्येति दृष्टान्तरूपार्थाक्षिप्तेत्यर्थः इदमपि अप्रस्तुतबुद्धेः कार्यत्वमपि अपिनाप्रस्तुतबुद्धेः कारणत्वं प्रागुक्तं समुच्चीयते त्वदंगमार्दवे दृष्टे कस्य चित्ते न भासते मालतीशशभृल्लेखाकदलीनां कठोरतेति तुल्य

लज्जा तिरश्चां यदि चेतसि स्यादसंशयं पर्वतराजपुत्र्याः तं केशपाशं प्रसमीक्ष्य कुर्युर्वालप्रियत्वं शिथिलं च मर्य
इति उदाहरणान्तरे तथैव स्पष्टं अंगानामकठोरतेति तृतीयपादे तु वर्णनीयांगसौकुमार्यातिशयनिरीक्षणकार्यत्वमपिनार्थाक्षेप्यमालतीकठोरत्वे विवक्षितं प्रतिप्रयोगिविशेषापेक्षकठोरत्वस्य तदकार्यत्वात् किंतु तद्बुद्धेरेव इदमपि त्वदंगमार्दवे दृष्ट इत्याद्युदाहरणान्तरे तथैव स्पष्टं

योगितायां प्रागुदाहृतं ननु कार्यरूपेणाप्रस्तुतेनार्थेन यत्र प्रस्तुतं तत्कारणमवगम्यते सा कार्यनिबंधना अप्रस्तुतप्रशंसोच्यते नचोदाहृते पुत्तत्संभवः मालतीकठोरत्वादेरप्रस्तुतस्यार्थस्याकार्यतायास्त्वयैव दर्शित्वात् ७

७

एवंप्रस्तुतस्यकामिनीगतिनिष्ठसौंदर्यातिशयादेर्निरीक्षणस्येवकारणत्वेनस्वरूपतस्तस्याकारणत्वादित्यतआह अर्थस्येति अयमाशयः अर्थस्याप्रस्तुतत्वेसुतरांतद्बुद्धेरप्रस्तुतत्वात्कार्यत्वाच्चनतावदप्रस्तुतकार्यत्वांशासंभवः अर्थत्वस्यप्रयोजनाभावेनलक्षणेअनिवेशाद्व्यावर्तकत्वाच्च नापिप्रस्तुतस्यकारणत्वांशस्यासंभवःस्वरूपतस्तस्याहेतुत्वेपिज्ञातस्यहेतुत्वादिति ननुगतिसौंदर्यादेर्ज्ञानमेवहेतुर्नतुज्ञायमानंगतिसौं

अर्थस्यकार्यत्वइवबुद्धेःकार्यत्वेपिकार्यनिबंधनत्वंनहीयतइति एतादृशान्यपिकार्यनिबंधनाप्रस्तुतप्रशंसायामुदाहृतानिप्राचीनैः वस्तुतस्तुनदतिरेकेपिनदोषः नह्यप्रस्तुतप्रशंसायांप्रस्तुताप्रस्तुतयोःपंचविधएवसंबंधइतिनियंतुंशक्यते संबंधांतरेष्वपितद्दर्शनात् ॥

दर्यादि तदभावेपिज्ञानमात्रात्कार्योत्पत्तेरित्यस्वरसादाह वस्तुतस्त्विति तदतिरेकेतस्याःप्राचीनोदाहृताप्रस्तुतप्रशंसायाअतिरेकेप्रकारपंचकाधिक्येष ॥

तापेति हेहरे त्वन्निश्वासरूपमंदमारुतेननिर्बुसीकृतस्य बुसरहितीकृतस्य स्मितरूपस्य आध्यात्मिकादितापत्रयौषधश्रेष्ठस्य विप्रकीर्णाः कडंकरच्चया बुससमूहा इवेते जैवातृकस्य चंद्रस्य किरणा जगति भ्रमंतीत्यन्वयः तत्सारतारूपः किरणसारतारूपः एवमिति त्वत्सारमि

यथा तापत्रयौषधवरस्य त्वत्स्मितस्य निश्वासमंदमरुता निर्बुसीकृतस्य एते कडं
करच्चया इव विप्रकीर्णा जैवातृकस्य किरणा जगति भ्रमंति अत्र त्वप्रस्तुतानां चंद्रकिर
णानां भगवन्मंदस्मितरूपदिव्यौषधधान्यविशेषकडंकरच्चयत्वोत्प्रेक्षणेन भगवन्मंद-
स्मितस्य तत्सारतारूपः कोप्युत्कर्षः प्रतीयते न च धान्यकडंकरच्चययोः कार्यकारणभा
वादिसंबंधोस्ति अतः सहोत्पत्यादिकमपि संबंधांतरमाश्रयणीयमेव एवमुपमानोपमेया
वाश्रित्य नत्र कविकल्पितकार्यकारणभावनिबंधने अप्रस्तुतप्रशंसे दर्शिते ततोन्यत्रापि दृश्यते

त्युदाहरणे चंद्रवदने उपमानोपमेयपदार्थावाश्रित्य चंद्रसारांशहरणस्य सतः कविप्रौढोक्तिकल्पितं कारणत्वं एवमन्येष्वपि द्रष्टव्यम्

कालिंदीति नर्मदायाः समुद्रस्य च संवादोयं तत्र यमुनाख्यासमुद्रेण कालिंदी त्वं के कोपात्ता कृतं नर्मदाया उत्तरं हे कुंभोद्भव अगस्त्य मुने ब्रूहि-
नि ततः पुनः समुद्रस्य प्रतिवचनं अहं जलधिर्भवामि मम शत्रो नाम कस्माद्धे नार्मृक्तालीति सा पुनराह नर्मदाहमित्यादि ततः समुद्रः पुनराह

यथा कालिंदि ब्रूहि कुंभोद्भव जलधिरहं नाम गृह्णामि कस्माच्छत्रोर्मे नर्मदाहं त्वमपि वदसि मे
नाम कस्मात्सपत्न्याः मालिन्यं तर्हि कस्मादनुभवसि मिलत्कज्जलैर्मालवीनां नेत्राम्भोभिः किमासां स
मजनि कुपितः कुंतलक्षोणिपालः अत्र किमासां समजनीति मालवीनां तथा रोदनस्य निमित्ते पृष्टे
तत्प्रियमरणरूपनिमित्तमनाख्याय कुपितः कुंतलक्षोणिपाल इति तत्कारणमभिहितमिति का
रणनिबंधना मालवान्प्रति प्रस्थितेन कुंतलेश्वरेण किं तेनाशिनाइति पृष्टे तद्वधानंतरभाविजल
धिनर्मदाप्रश्नोत्तररूपं कार्यमभिहितमिति अत्रैव कार्यनिबंधनापि पूर्वस्याप्रश्नः शाब्दः अस्यामार्थ इति
भेदः तर्हि कुतो मालिन्यमनुभवसीति सा पुनराह मिलत्कज्जलैर्मालवदेशांगनानां नेत्राश्रुभिरिति ततः किमासां जान
नितिसमुद्रस्य प्रश्नः कुंतलदेशाधिपः कुपित इति नर्मदाया उत्तरमिति इत्यलंकारचंद्रिकायामप्रस्तुतप्रशंसाप्रकरणं ७

प्रस्तुतेनेति प्रधानभूतप्रस्तुतांतराभिव्यंजकं प्रस्तुतवर्णनं प्रस्तुतांकुरालंकारः प्रस्तुतस्याभिव्यंजकत्वादंकुर इवांकुर इतिव्युत्पत्तेः किमिति हे भ्रमर मालत्यां विद्यमानायां कंटकेद्धया कंटकव्यासया केतक्या किं प्रयोजनमिति प्रस्तुतेन भ्रमरवृत्तांतेन मयि मनोहारिण्यां सत्यां किमुद्वेगकारिण्याप

प्रस्तुतेन प्रस्तुतस्य द्योतने प्रस्तुतांकुरः किं भृंग सत्यां मालत्यां केतक्या कंटकेद्धया यत्र प्रस्तुतेन वर्ण्यमानेनाभिमतमन्यत्प्रस्तुतं द्योत्यते तत्र प्रस्तुतांकुरालंकारः उत्तरार्द्धमुदाहरणं इह प्रियतमेन साकमुद्याने विहरंती काचिद्भृंगं प्रत्येवाहेति वाच्यार्थस्य प्रस्तुतत्वं न वा नामंत्रणीयामंत्रणेन वाच्यासंभवादप्रस्तुतमेव वाच्यमिह स्वरूपप्रस्तुतावगतये निर्दिष्टमिति वाच्यं भोग्यादिना भृंगादावप्यामंत्रणस्य लोके दर्शनात् यथा

रवनितयेति नायकवृत्तांतः प्राधान्येन प्रस्तुतो ऽभिव्यज्यते कथमिह भृंगवृत्तांतस्य प्रस्तुतत्वं तत्राह इहेति तथा च भृंगसंबोध्यकत्वात्तद्वृत्तांतोपि प्रस्तुत इति भावः अनामंत्रणीयामंत्रणेन संबोध्यत्वायोग्यसंबोधनेन वाच्यासंभवात् भृंगसंबोध्यकवाच्यार्थसंभवात् ॥ ६ ॥ ६

कस्त्वमिति शाखोटकतरुंप्रति कस्यचित्पथिकस्य प्रश्नोक्तिः कथयामीत्याद्युत्तरं वैराग्यादिव वदसीतिपुनः प्रश्नः साधुविदित्तमित्तिशाखोटकस्योत्तरं कस्मादिदंवैराग्यमित्तिपुनः प्रश्नः कथ्यतइतिपुनरुत्तरंप्रतिज्ञायशाखोटक आह वामभागेनोपलक्षितोत्र वटोस्तितंपांथोजनःसर्वा

कस्त्वंभोः कथयामिदैवहतकंमांविद्धिशाखोटकंवैराग्यादिव वक्षिसाधुविदितंकस्मादिदंकथ्यते वामेनात्रवटस्तमध्वगजनःसर्वात्मनासेवतेनछायापिपरोपकारकारिणीमार्गस्थितस्यापिमे इत्यत्रचेतनाचेतनप्रश्नोत्तरवत्तिर्यगामंत्रणस्यात्यंतमसंभावितत्वाभावात् एवंप्रस्तुतेनवाच्यार्थेनभृंगोपालंभरूपेणवक्र्याः कुलवध्वाः सौंदर्याभिमानशालिन्याः क्रूरजनपरिवृत्तिदुःप्रधर्षायांपरवनितायांविटसर्वस्वापहरणसंकल्पदुरासदायांवेश्यायांवाकंटकसंकुलकेतकीकल्पायांप्रवर्तमानंप्रियतमंप्रत्युपालंभोद्योत्यते

अनासमित्यत्रछायादिभिःसेवतेआश्रयति ममपुनर्मार्गेस्थितस्यापिनछायापिपरोपकारसंपादिकेतिभूलाधारत्वादितिभावः वामेनेतिमार्गेतिचश्लिष्टं अत्यंतं आरोपेणापि परवनितायामिति वेश्यायामितिन्चविषयसप्तमी तद्विषयेइत्यर्थः विटानां सर्वस्वस्यापहरणेयः संकल्पस्तेनदुःप्रापेतिवेश्याविशेषणं॥

अन्येतिं हे भृंग अन्यासूपमर्दक्षमासु सुमनसां पुष्पाणां लतासु तावत् यावत् नवमल्लिकायाः कलिका संजातरजस्का भवति लोलं चपलं मनो विनोदय लोलमिति क्रियाविशेषणं वा नवमल्लिकायलताविशेषस्य बालामभिनवां असंजातरजस्कां कलिकामकाले व्यर्थं किमिति कद

यथा वा अन्यासु लावद्रुपमर्दसहासु भृंगलोलं विनोदय मनः सुमनोलतासु बालामजातर जसं कलिकामकाले व्यर्थं कदर्थयसि किं नवमल्लिकायाः अत्राप्युद्यानमध्येचरंतं भृंगं प्रत्युपा लंभ इति वाच्यार्थस्यापि प्रस्तुतत्वं इदं च प्रौढांगनासु सतीषु बालिकां रतये क्लेशयति कामिनि श्रृण्वति कस्याश्चिद्विदग्धाया वचनमिति तं प्रत्युपालंभो द्योत्यते ७ ७

र्थयसि पीडयसीत्यन्वयः रजः पुष्परजः स्त्रीणां रेतश्च श्रृण्वतीति एतद्वचनं श्रृण्वति सतीत्यर्थः ७ ७ ७

कोशेति इयंनलिनीकमलिनीकोशद्वंद्वंमुकुलयुगलंकादंबस्यहंसस्यचंच्वाक्षतंक्षतंदधाति धत्ते तथेयंचूतस्याम्रस्यलतानूननंपल्लवंपुंरूपैः कोकिलैरास्वादितंचर्वितंधत्तेइतिदीर्घिकायावाप्यास्तटे मिथः परस्परंसखीजनस्यवचआकर्ण्यसाप्रस्तुतानायिकाकमलमुकुला

यथावा कोशद्वंद्वमियंदधातिनलिनीकादंबचंचूक्षतंधत्तेचूतलतानवंकिसलयंपुंस्कोकिलास्वादितं इत्याकर्ण्यमिथःसखीजनवचःसादीर्घिकायास्तटेचेलांतेनतिरोदधेस्तनतटंबिंबाधरंपाणिना अत्रेयमितिनलिनीव्यक्तिविशेषनिर्देशेन दीर्घिकायास्तट इत्यनेनचवाच्यार्थस्यप्रस्तुतत्वंस्पष्टं प्रस्तुतांतरद्योतनंचोत्तरार्धेस्वयमेवकविनाविष्कृतं अत्राद्योदाहरणयोरन्यापदेशध्वनिमाहलोचनकारः अप्रस्तुतप्रशंसायांवाच्यार्थोऽप्रस्तुतत्वाद्वर्णनीयइतितत्राभिधायामपर्यवसितायांतेनप्रस्तुतार्थव्यक्तिरलंकारः इहतुवाच्यस्यप्रस्तुतत्वेनतत्राभिधायांपर्यवसितायामर्थसौंदर्यबलेनाभिमतार्थव्यक्तिर्ध्वनिरेवेति वस्तुतस्तयमप्यलंकारएवनध्वनिरितिव्यवस्थापितंचित्रमीमांसायां



ग्रपल्लवव्याजेनैतामदीयस्तनाधरक्षतवृत्तांतंकथयंतीतिशालाचेलस्यवस्त्रस्यांतेनप्रांतेनस्तनतटंतिरोदधेबिंबरूपमधरंचपाणिनातिरोदधे आच्छादितवतीत्यन्वयः अन्यापदेशेति अन्यस्यापदेशोमिषंयतादृशाक्तिरित्यर्थः तदीयमेवग्रंथंदर्शयति अप्रस्तुतेत्यादि व्यवस्थापितमिति प्रस्तुतत्वेपिमुख्यतयातात्पर्याभावात्तत्राप्यभिधापर्यवसानाभावादिति-भावः

सान्येवेति साअलंकृतिर्ध्वनेःसकाशादन्यैवेत्यर्थः प्रस्तुतत्वलंभनेनंप्रस्तुतत्वप्राप्त्या रात्रिरिति हेविलोचनेशिवाकल्याणरूपाकाचनअनिर्वच
नीयप्रभावारात्रिःशिवरात्रिरित्यर्थः संनिधत्तेसंनिहिताभवतिअतःयुवांअप्रमत्तेजागृतंजाग्रद्रूपेभवतं कुतस्तत्राह युवयोःसकाशेसमीपेअचि

तृतीयोदाहरणस्यत्वलंकारत्वेकस्यापिनविवादः उक्तंहिध्वनिकृता शब्दार्थशक्त्याक्षिप्तोपिव्यंग्योर्थःकविनापुनः यत्राविष्क्रियतेस्वोक्त्यासान्येवालंकृतिर्ध्वनेरिति एतान्यपिसारूप्यनिबंधनान्युदाहरणानि संबंधांतरनिबंधनान्यपिकथंविद्वाच्य-व्यंग्ययोःप्रस्तुतत्वनिबंधनेनोदाहरणीयानि दिङ्मात्रमुदाह्रियते रात्रिःशिवाकाचनसन्निधत्तेविलोचनेजागृतमप्रमत्ते समानधर्मायुवयोःसकाशेसखाभविष्यत्यचिरेणकश्चित् अत्रशिवसारूप्यमिवतदेकदेशतयातद्वाच्यं ललाटलोचनमपिशिवरात्रिमाहात्म्यप्रयुक्तत्वेनवर्णनीयमितितन्मुखेनकृत्स्नंशिवसारूप्यंगम्यं ७ ७ ७

रेणसमानधर्मसिदृशः सखाकश्चिद्भविष्यतितृतीयंलोचनंभालेभविष्यतीत्यर्थः तदेकदेशतयेति शिवरात्रिमाहात्म्यप्रयुक्तत्वेहेतुः तद्धवर्ण्य-
त्वे तद्वाच्यं उदाहृतकाव्यवाच्यं एवंचैकदेश्येकदेशभावसंबंधनिबंधनत्वमत्रदर्शितं ७ ७ ७

वहंतीति भगवत्याः सीमंतवर्णनमिदं अयि शिवे तव सीमंतसरणिः नः क्षेमं तनोत्वित्यन्वयः कीदृशी सिंदूरं वहंती किमिव प्रबलानां केशपाशरूपांधकारदीप्तीनां समूहैर्बंदीकृतं बालार्ककिरणमिव सरणिः केव त्वद्वदनसौंदर्यलहरीणां परीवाहरूपा स्रोतसः सरणिरिवेति परीवाहो जलनिर्गममार्गः जलोच्छ्वासाः परीवाहा इत्यमरः अंगेति विरहसंतापवर्णनं अंगसंबद्धं मृणालकांडं भृंगेभ्यो विशेषरहितां तत्समां रुचं कांतिमयते प्राप्नोति ना-



यथावा वहंती सिंदूरं प्रबलकबरीभारतिमिरत्विषां वृंदैर्बंदीकृतमिव नवीनार्ककिरणं तनोतु क्षेमं नस्तव वदनसौंदर्य
लहरीपरीवाहस्रोतःसरणिरिव सीमंतसरणिः अत्र वर्णनीयत्वेन प्रस्तुतायाः सीमंतसरणेर्वदनसौंदर्यपरीवाहत्वोत्प्रे
क्षणेन परिपूर्णतटाकवत्परीवाहकारणीभूता स्वस्थाने अमांती वदनसौंदर्यसमृद्धिः प्रतीयते सापि वर्णनीयत्वेन प्रस्तु
तैव यथावा अंगासंगिमृणालकांडमयते भृंगावलीनां रुचं नासामौक्तिकमिंद्रनीलसरणिं श्वासानिलाद्धाहते दत्तेयं
हिमवालुकापि कुचयोर्धत्ते क्षणं दीपतां तत्प्रायः पतितांबुवत्करतले धारांबु संलीयते

पातिशये न मलिनीभावात् नासामौक्तिकं श्वासानिलाद्दत्युष्णाद्धेतोरिंद्रनीलमणेः पदवीं तत्साम्यं गाहते प्राप्नोति तथा कुचयोर्दत्तानिहिते यं हिमवालुका कर्पूरं क्षणं दीपरूपतां धत्ते एवं करतले धारारूपेण सिक्तं जलं तत्प्रायः पिंडपतितजलवत्संलीयते तापातिशयात् शोषं प्राप्नोतीत्यर्थः ६ ६ ६

उदाहरणद्वयेपिकार्यनिबंधनत्वंव्यक्तं नतत्रयमिति द्वयोरपिवाच्यत्वादितिभावः अयमित्युपलक्षणं अप्रस्तुतप्रशंसाधिनेतिबोध्यं किंकृत स्तर्हितत्रचमत्कारोऽतआह किंस्विति परीत्ति रत्नावल्यांस्वविरहातुरायाःसागरिकायाःशयनमुपगतस्यराज्ञइयमुक्तिः इदंबिसिनीपत्रर चितंशयनंकृशांग्याःसंतापंवदत्यनुमापयति किंभूतं पीनस्तनजघनसंगादुभयतऊर्ध्वाधोभागयोःपरिम्लानं तनोःकृशस्यमध्यस्यपरिमिल

अत्रनायिकायाविरहासहत्वातिशयप्रकटनायसंतापवत्कार्याणिमृणालमालिन्यादीन्यपिवर्णनीयत्वेनविवक्षि तानीतितन्मुखेनसंतापोवगम्यः यत्रकार्यमुखेनकारणस्यावगतिरपिश्लोकेनिबद्धानतत्रायमलंकारःकिंत्व नुमानमेव यथा परिम्लानंपीनस्तनजघनसंगादुभयतस्तनोर्मध्यस्यांतःपरिमिलनमप्राप्यहरितं इदंव्यस्त न्यासंप्रशिथिलभुजाक्षेपवलनैःकृशांग्याःसंतापंवदतिनलिनीपत्रशयनं ६७

नंसंघर्षमप्राप्यअंतर्मध्यभागेहरितवर्णं एवंप्रकर्षेणशिथिलयोर्भुजयोराक्षेपैश्चवलनैश्चव्यस्तःविषमीकृतोन्यासोरचनायस्यतादृशमिति इत्यलंकारचंद्रिकायांप्रस्तुतांकुरप्रकरणं ६९ ६९ ६९

ननु प्रस्तुतकार्याभिधानमुखेन कारणस्य गम्यत्वमपि प्रस्तुतांकुरविषयश्चेत्किं तर्हि पर्यायोक्तमित्याकांक्षायामाह पर्यायोक्तमिति वचःप्रतिपादनं भंग्यंतराश्रयं भंग्यंतरप्रकारकं लक्षणं परिष्कुरुते यदेवेति तथाच विवक्षितस्वप्रकारातिरिक्तेन चारुतरेण रूपेण व्यंग्यस्याभिधानं पर्यायोक्तमिति लक्षणं पर्यायेण भंग्यंतरेणोक्तमभिहितं व्यंग्यं यत्रेति व्युत्पत्तेः लक्षणे स्वपदं व्यंग्यपरं नच व्यंग्यस्यैव वाच्यत्वं निष्फलं विरुद्धं चेति वाच्यं प्रकारभेदात् तदुक्तं यदेवोच्यते तदेव व्यंग्यं यथा तु व्यंग्यं न तथोच्यत इति चारुतरेणेति विशेषणात् नमो राहुशिरश्छेदकारिणे

पर्यायोक्तं तु गम्यस्य वचो भंग्यंतराश्रयं नमस्तस्मै कृतो येन मुधा राहुवधूकुचौ यदेव गम्यं विवक्षितं तस्यैव भंग्यंतरेण विवक्षितरूपादपि चारुतरेण केनचिद्रूपांतरेणाभिधानं पर्यायोक्तं उत्तरार्धमुदाहरणं अत्र भगवान्वासुदेवः स्वासाधारणरूपेण गम्यः राहुवधूकुचवैयर्थ्यकारकत्वेन रूपांतरेण स एवाभिहितः

दुःखहारिणे इत्यत्र न पर्यायोक्तप्रसंगः स्वासाधारणरूपेण वासुदेवत्वेन यत्तु राहुशिरश्छेदकारित्वरूपव्यंग्यमादायैव पर्यायोक्तं वक्तुमर्हं न तु विशेषणसामर्थ्यलभ्यं वासुदेवत्वमादायेति तदयुक्तं राहुशिरश्छेदकारित्वस्य वाच्यसिद्ध्यंगत्वेन तेनापि विवक्षितं व्यंग्यं प्रधानभूतं वासुदेवत्वं तदादायैव तत्कथनोचितत्वात् राहुस्त्रीकुचनैष्फल्यकारिणे हरये नम इत्यत्र तु राहुशिरश्छेदकारित्वमेव विवक्षितं व्यंग्यमिति युक्तं तदादाय पर्यायोक्तमिति विभावनीयं

लोकमिति. यस्याक्षपादस्यांघ्रिः लोकंपश्यतिअथचसः लोकः यस्यपतंजलेः शेषावतारस्यांघ्रिंनपश्यतिउरगत्वात् ताभ्यांअक्षपादपतंजलिभ्यां अपरिछेद्या अनाकलनीया निवेद्यतामिति नलंप्रतिदमयंत्याउक्तिः तवअल्पदयंमनः कर्तृशिरीषकलिकामृदुत्वाभिमानमपनयंतोद्मोपा

लोकंपश्यतियस्यांघ्रिःसयस्यांघ्रिंनपश्यति ताभ्यामप्यपरिछेद्याविद्याविश्वगुरोस्तव
अत्रगौतमःपतंजलिश्चस्वासाधारणरूपाभ्यांगम्योरूपांतराभ्यामभिहितो यथावा निवेद्य
तांहंतसमापयंतो शिरीषकोशम्रदिमाभिमानं पादौकियद्दूरमिमौप्रयासेनिधित्सते
तुच्छदयंमनस्ते अत्रकियद्दूरंजिगमिषेतिगम्यएवार्थोरूपांतरेणाभिहितः ७

दौकियद्दूरपर्यंतंप्रयासेनिधातुमिच्छति हंतखेदे एतन्निवेद्यतांकथ्यतामित्यर्थः ७ ६२, ६१,

नयच्छब्दाभिहितत्वेनच व्यंग्यत्वायोगात् व्यंग्यस्य च राहुशिरश्छेदकारित्वस्य वासुदेवत्वस्य वा धर्मस्य प्रकारांतरेणानभिधानात् तस्मात्पर्यायेण कार्यादिद्वारेणोक्तं गम्यमाक्षिप्तं वेति लक्षणार्थ इति अभिधानं आक्षेपो व्यंजनं वा पर्यायोक्तमिति कश्चित्पर्यायोक्त इतिपाठस्त्वयुक्तः व्यंग्येनोपलक्षितमुक्तमिति व्याख्यानग्रंथविरोधात् नविग्रइति यच्छब्दाभिहितस्यापि भगवतो वासुदेवत्वादिना रूपांतरेण व्यंग्यतयाय

लोचनकृता पर्यायोक्तं यदन्येन प्रकारेणाभिधीयत इतीदमेव लक्षणमंगीकृत्य तदुदाहरणेच कार्येण शब्दाभिहितेन कारणं व्यंग्यं प्रदर्श्यतेतत्र लक्षणं लक्ष्यनामच क्लिष्टगत्या योजितं वाच्यादन्येन प्रकारेण व्यंग्येनोपलक्षितं सद्यदभिधीयते तत्पर्यायेण प्रकारांतरेण व्यंग्येनोपलक्षितमुक्तमिति सर्वोयं क्लेशः किमर्थ इति न विद्मः प्रदर्शितानि हि गम्यस्यैव रूपांतरेणाभिधाने बहून्युदाहरणानि चक्राभिघातप्रसभाज्ञयैवेति प्राचीनोदाहरणमपि स्वरूपेण गम्यस्य भगवतो रूपांतरेणाभिधानसत्वात्सुयोजमेव ७

थाश्रुतेबाधकाभावादितिभावः नचाभिधाविषये कथं व्यंजनेतिवाच्यं वासुदेवत्वादिना प्रतीयमाने भगवत्यभिधाविषयत्वासंभवात् तस्याः स्वावच्छेदकधर्मेणैव बोधकत्वात् अतएवोक्तं वाक्यादन्येनरूपेण ज्ञाते भवति लक्षणेति इह तु लक्षणाहेत्वाभावाद्व्यंजनोपगम्यत इति ७ ॐ ७

ननु प्रस्तुतेन तादृशरतोत्सवरूपेण कार्येण प्रस्तुतस्यैव राहुशिरश्छेदरूपकारणस्य प्रतीतौ चमत्कृतिविशेषस्तस्या अलंकारत्वं गमयति तच्चालोच्य
मानमप्रस्तुतप्रशंसाया असंभवादुक्तरीत्या पर्यायोक्तरूपतयैव स्वीकर्तव्यमित्याशंक्याह यत्त्विति अलंकाराणामियत्तानियमाभावेन प्रस्तुतांकुर
स्याप्यलंकारांतरत्वादेवंविधशब्दस्वारस्यभंगेन प्राचीनलक्षणव्याख्यानमयुक्तमितिभावः संक्षेपतो दर्शितमपि पर्यायोक्तविषयं विशदयति प्रस्तु
तेनेत्यादिना यत्तु भगवद्रूपेणावगमनं विशेषणमर्यादालभ्यत्वेनासुंदरं पर्यायोक्तस्य विषय इति तदविचारितरमणीयं नहि पर्यायोक्ते व्यंग्य

यत्तु तत्र राहुशिरश्छेदावगमनं तत्र प्रागुक्तरीत्या प्रस्तुतांकुर एव प्रस्तुतेन च राहोः शिरोमात्रावशेषेणालिंगनवंध्यत्वा
द्यापादनरूपेणान्ये भगवतो रूपांतरे उपपादिते तेन भगवतः स्वरूपेणावगमनं पर्यायोक्तस्य विषयः

सौंदर्यकृतो विच्छित्तिविशेषः

किंतु भंग्यंतराभिधानकृत एव व्यंग्यं तु भंग्यंतराभिधानतोऽसुंदरमेव प्रायशो दृश्यते यथा इहागंतव्यमिति विवक्षिते व्यंग्ये अयं देशोऽलंकरणी
यः सफलतामुपनेतव्य इत्यादाव तस्तदसुंदरत्वोद्भावनमकिंचित्करमेव अलंकारसर्वस्वकारग्रंथविरोधोद्भावनं तु तन्निक्षाकारिणं प्रति न शोभते
उपजीव्यत्वोद्भावनमपि ग्रंथस्याकिंचित्करमेव युक्तिविरोध इति परोत्कर्षासहिष्णुत्वमात्रमुद्भावयितुरधगम्यत इत्यलं विस्तरेण ६१

प्रकारांतरेणपर्यायोक्तंलक्षयति पर्यायोक्तमिति रमणीयेनव्याजेनमिषेणस्वस्यपरस्यवाइष्टस्ययत्साधनंसंपादनंतदपिपर्यायोक्तं पर्यायेण व्याजरूपेणोक्तंयत्रेतिव्युत्पत्तेः संपादनेति संपादनरूपंयदिष्टंतत्साधनंतत्करणमित्यर्थः देहीति परिधानेनअधरवस्त्रेणनिगूहितमाच्छा

पर्यायोक्तलक्ष्याऊयद्व्याजेनेष्टसाधनं यामिचूतलतांद्रष्टुं युवाभ्यामास्यतामिह अत्रनायिकांनायकेनसंगमय्यचूतलतादर्शनव्याजेननिर्गच्छंत्यासख्यातत्स्वाछंद्यसंपादनरूपेष्टसाधनंपर्यायोक्तं यथावा देहिमत्कंदुकंराधेपरिधाननिगूहितं इतिविस्रंसयन्नीवींतस्याःकृष्णोमुदेस्तुनः पूर्वत्रपरेष्टसाधनमत्रकंदुकशोधनार्थंनीवीविस्रंसनव्याजेनस्वेष्टसाधनमितिभेदः ६ ॐ ६

दितमित्यर्थः एवंचप्रकारद्वयसाधारणंतदन्यतरत्वंसामान्यलक्षणंबोध्यं इत्यलंकारचंद्रिकायांपर्यायोक्तप्रकरणम् ६२

उक्तिरिति अत्र निंदास्तुतिभ्यामिति स्तुतिनिंद्योरितिचेतरेतरयोगो नविवक्षितः तथाच निंदयास्तुतेः स्तुत्याच निंदायाः स्तुत्यास्तुतेश्चोक्तिरभिव्यक्तिर्व्याजस्तुतिरित्यर्थः प्रथमे व्याजेन स्तुतिरितिच रमयोर्व्याजरूपास्तुतिरितिच व्युत्पत्तेः अतएव व्याजस्तुतिपदार्थानुगमाभावान्निंदयानिंदाभिव्यक्तिर्व्याजनिंदाख्यमलंकारांतरमित्यग्रेवक्ष्यते एवमाद्ये प्रकारद्वये स्तुतिनिंदयोः समानविषयत्वभिन्नविषयत्वाभ्यां प्रत्येकं द्वैविध्यमितिच

उक्तिर्व्याजस्तुतिर्निंदास्तुतिभ्यां स्तुतिनिंदयोः कः स्वर्धुनि विवेकस्ते पापिनो नयसे दिवं साधु दूति पुनः साधु कर्तव्यं किमतः परं यन्मदर्थे विलूनासि दंतैरपि नखैरपि निंदयास्तुतेः स्तुत्यानिंदाया वा अवगमनं व्याजस्तुतिः कः स्वर्धुनीत्युदाहरणे विवेको नास्तीति निंदा व्याजेन गंगासुकृतिवदेव महापातकादिकृतवतोपि स्वर्गं नयतीति व्याजरूपया निंदया तत्प्रभावातिशयस्तुतिः साधु दूतीत्युदाहरणे मदर्थे महांतं क्लेशमनुभूतवत्यसीति व्याजरूपया स्तुत्या मदर्थं न गतासि किंतु रंतुमेव गतासि धिक्त्वां दूतीकाधर्मविरुद्धकारिणीमिति निंदावगम्यते ॥ ७ ॥ ७

त्वारो भेदाः अंत्यस्तु भिन्नविषयस्तुतिक एक एवेति पंचभेदाः लक्षणं तु व्याजनिंदाभिन्नत्वे सति स्तुतिनिंदान्यतरपर्यवसायि स्तुतिनिंदान्यतरत्वं सर्वत्रानुगतं बोध्यं ७ ७ ७

कस्त इति नृपं प्रति कवेरुक्तिः त्वयि योद्धुमेकं सप्तिमश्वमास्थिते आरूढे सति परिपंथिनः शत्रवः सप्ताश्वसमारूढा भवंतीत्यन्वयः सप्तसप्तयो
श्वा अस्येति सूर्यः सप्त च ते सप्तयः अश्वास्तत्समारूढा इति द्वितीयोर्थो निंदाद्योतकः त्वया संमुखाहताः सूर्यमंडलं भित्वा दिवमुपगता इति स्तुतौ
पर्यवसानं अर्द्धमिति शिवस्य देहार्धं दानवानां वैरिणा हरिणा आत्दतं हरिहरात्मकस्यैकस्य विग्रहस्य प्रसिद्धेः एवं गिरिजयाप्यवशिष्टार्धमा-



यथा वा कस्त्वं शौर्यमदो योद्धुं त्वय्येकं सप्तिमास्थिते सप्तसप्तिसमारूढा भवंति परिपंथिनः अ
र्द्धं दानववैरिणा गिरिजयाप्यर्द्धं शिवस्यात्दतं देवेत्थं जगतीतले स्मरहराभावे समुन्मीलति गंगासा
गरमंबरं शशिकला नागाधिपः क्ष्मातलं सर्वज्ञत्वमधीश्वरत्वमगमत्त्वां मां च भिक्षाटनं ॥

त्दतं हे देवराजन् इत्थमुक्तप्रकारेण जगतीतले स्मरहरस्याभावे समुन्मीलति प्रकाशमाने सति गंगा सागरं प्रत्यगमदित्याद्यन्वयः नागाधिपः
शेषः क्ष्मातलं पातालं त्वामिति पूर्वान्वितं ॥ ॥ ॥ ॥

वैदुष्यादीति विद्वत्त्वादीत्यर्थः आदिनातपः शीलादिपरिग्रहः दारिद्र्यादीत्यादिपदेन कुटुंबबाहुल्यादिपरिग्रहः नचात्रराजवर्णनप्रस्तावे कथंस्तुते व्याजरूपत्वमितिवाच्यं स्तुतिपर्यवसानविवक्षायांस्वकीयभिक्षाटनोद्घाटनस्यासंगतत्वेनस्तुतेरुक्तनिंदारूपोपालंभपर्यवसानस्यानुभवसिद्धस्या विरुद्धत्वात् कस्त्वमिति अंगदंप्रतिकस्यचिद्राक्षसस्यप्रश्नः रामरूपस्यराज्ञोभवनेलेखार्थस्यसंदेशस्यवाहकोस्मीत्युत्तरं पुरापूर्वमागतः निर्दग्धलंका

अत्राद्योदाहरणेसमस्तपदगतश्लेषमूलनिंदाव्याजेनस्तुतिर्व्यज्यते द्वितीयोदाहरणेसर्वज्ञःसर्वेश्वरोसीतिराज्ञःस्तुत्याव्या जरूपयामदीयवैदुष्यादिदारिद्र्यादिसर्वंजानन्नपिबहुप्रदानेनरक्षितुंशक्तोपिमह्यंकिमपिनददासीतिनिंदाव्यज्यते सर्वमिदंनिं दास्तुत्योरेकविषयत्वेउदाहरणं भिन्नविषयत्वेनिंदयास्तुत्यभिव्यक्तिर्यथा कस्त्वंवानररामराजभवनेलेखार्थसंवाहकोयातः कुत्रपुरागतःसहनुमान्निर्दग्धलंकापुरः बद्धोराक्षससूनुनेतिकपिभिःसंताडितस्तर्जितःसव्रीडात्तपराभवोवनमृगःकु त्रेतिनज्ञायते अत्रहनुमन्निंदयाइतरवानरस्तुत्यभिव्यक्तिः

पुरःसहनुमान्कुत्रयातइतिपुनःपूर्वस्यप्रश्नः बद्धइत्याद्युत्तराधमंगदस्योत्तरं राक्षसस्यरावणस्यसूनुनाबद्धइतिहेतोःकपिभिर्वानरैःसम्यक्ताडितस्तर्जितःसवनमृगः हनुमान्व्रीडयालज्जयाआत्तःप्राप्तःपराभवोयेनतादृशःकुत्रयातइतिनज्ञायतइत्यन्वयः ७ ७ ७

यदिति हेकुरंगयद्यस्माद्धनिनांमुखंमुहुर्मुहुर्वारंवारंनेक्षसेनपश्यसि मृषामिथ्याचाटून्प्रियशब्दान्नवदसि यदितिसर्वत्रसंबध्यते एषांधनिनां गर्वयुक्तंवचनंनशृणोषि तान्धनिकान्प्रतिआशयाधनाशयानधावसि परंकेवलंकालेक्षुधासमये खादसिभक्षयसिनिद्रायाआगमेचनिद्रांप्राप्नोषि

स्तुत्यानिंदाभिव्यक्तिर्यथा यदुक्तंमुहुरीक्षसेनधनिनांब्रूषेनचाटून्मृषानैषांगर्ववचःशृणोषिनचतान्प्रत्याशयाधावसि काले बालतृणानिखादसिपरंनिद्रासिनिद्रागमेतन्मेब्रूहिकुरंगकुत्रभवताकिंनामतप्तंतपः अत्रहरिणस्तुत्याराजसेवानिर्विण्ण स्यात्मनोनिंदाऽभिव्यज्यते अयमप्रस्तुतप्रशंसाविषयइतिअलंकारसर्वस्वकारः तेनहिसारूप्यनिबंधनाप्रस्तुतप्रशंसोदा हरणानंतरंवैधर्म्येणापिदृश्यते यथा धन्याःखलुवनेवाताःकाल्हाराःसुखशीतलाः राममिंदीवरश्यामंयेस्पृशंत्यनि वारिताः अत्रवाताधन्याइतिअप्रस्तुतार्थादहमधन्यइतिवैधर्म्येणप्रस्तुतोर्थःप्रतीयतइतिव्युत्पादितं इयमेवाप्र स्तुतप्रशंसानकार्यकारणनिबंधनेतिदंडी

तत्तस्मात्कुत्रतीर्थेकिंनामतपस्तप्तंतत्ब्रूहीत्यन्वयः निर्विण्णस्यखिन्नस्य तेनहीत्यस्यइ तिव्युत्पादितमित्यग्रेतनेनान्वयः कल्हारंजलपुष्पविशेषः तत्संबंधिनःकाल्हाराःसुखयंतीतिसुखाश्चतेशीतलाश्चेत्यर्थः ७

अप्रकांडे अप्रस्तावे तथाचाप्रस्तुतान्वासौ प्रशंसा चेतिव्युत्पत्तिरिति भावः नपरसेविनोःपरसेविनः प्रशस्यते स्तूयते मतद्वयेप्यस्वरसबीजं दर्शयतिव
स्तुतस्त्विति अभिव्यक्तिरितियोःप्रस्तुतप्रशंसातो वैचित्र्यस्य विषय आलंबनभूतो विशेष इत्यन्वयः अन्यथा ततो वैचित्र्येपि तदंतर्भावांगीकारे

यदाह अप्रस्तुतप्रशंसास्यादप्रकांडेतुया स्तुतिः सुखंजीवंति हरिणा वनेष्वपरसेविनः अर्थैरयल
सुलभैर्जलदर्भांकुरादिभिः सेयमप्रस्तुतैवात्र मृगवृत्तिः प्रशस्यते राजानुवर्तनक्लेश निर्विण्णेन मनस्वि
नेति वस्तुतस्त्वत्रव्याजस्तुतिरित्येव युक्तं स्तुत्या निंदाभिव्यक्तिरित्यप्रस्तुतप्रशंसातो वैचित्र्यविशेषसद्भा
वात् अन्यथा प्रसिद्धव्याजस्तुत्युदाहरणेष्वप्यप्रस्तुताभ्यां निंदास्तुतिभ्यां प्रस्तुते स्तुतिनिंदे गम्येते इत्येता
वता व्याजस्तुतिमात्रमप्रस्तुतप्रशंसास्यात् एवंचानया प्रक्रियया यत्रान्यगतस्तुतिविवक्षयान्यस्तुतिः
क्रियते तत्रापि व्याजस्तुतिरेव अन्यस्तुतिव्याजेन तदन्यस्तुतिरित्यर्थानुगमसद्भावात् ६९

एवंचेति अन्यगतस्तुतिनिंदाभ्यामन्यगतनिंदास्तुत्यभिव्यक्त्यो र्व्याजस्तुतित्वसिद्धेश्चेत्यर्थः प्रक्रियया प्रकारेण ॐ

शिखरिणीति नायिकांप्रतिनायकस्योक्तिः हेतरुणि असौशुकबालकः नाम वितर्के कनु कस्मिन् शिखरिणि पर्वते कियत्कालं चिरं किमभिधानं किंनामकं तपः अकरोद्येन हेतुना तवाधरवत्पाटलं रक्तवर्णं बिंबफलं दशतीत्यन्वयः इत्यलंकारचंद्रिकायां व्याजस्तुतिप्रकरणं

व्याजनिंदांलक्षयति निंदायाइति यत्रान्यनिंदयाऽन्यस्यनिंदायाअभिव्यक्तिः पर्यवस्यति सा व्याजनिंदा इतरनिंदाव्याजेन निंदेतिव्युत्पत्तेः वि

यथा शिखरिणि क नु नाम कियच्चिरं किमभिधानमसावकरोत्तपः तरुणि येन तवाधर पाटलं दशति बिंबफलं शुकशावकः अत्र शुकशावकस्तुत्या नायिकाधरसौभाग्यातिशयस्तु तिर्व्यज्यते निंदायानिंदया व्यक्तिर्व्याजनिंदेति गीयते विधेस निंद्यो यस्ते प्रागेकमेवाहरच्छिरः अत्र हरनिंदया विषमविपाकं संसारं प्रवर्तयतो विधेरभिव्यंग्या निंदा व्याजनिंदा ७

धेइति हेविधे ब्रह्मन् प्राक् पूर्वं ते तवैकमेव शिरो यः अहरत् अछिनत् सएवार्थात् हरो निंद्य इत्यन्वयः निंदयेत्यभिव्यंग्येत्यनेनान्वितं निंदयाभिव्यंग्या विधेर्निंदा व्याजनिंदेत्यन्वयः विषमविपाकं दारुणपरिणामं ॥ ७ ७

विधिरेवेति विशेषतोगर्हणीयः निंदनीयः हे करट काक त्वं रटरटनं कुरु योसौ विधिः आम्रवृक्षे सरलेन सोम्येन कोकिलेन सहवासं न व्यधका रित्यन्वयः ननु केनाप्यालंकारिकेणानुक्ताया व्याजनिंदायाः कथमलंकारत्वेनांगीकरणमित्याशंक्याह प्रतिबंदीति तुल्ययुक्त्या प्रतिबंदी स्थानीयेत्यर्थः तथा च स्तुतिवन्निंदायामप्यप्रस्तुतप्रशंसातो वैचित्र्यविशेषात्तदनंतर्भावे व्याजस्तुतौ चार्थानुगमाभावादनंतर्भावे इष्टथगलं

यथा वा विधिरेव विशेषगर्हणीयः करट त्वं रटकस्तवापराधः सहकारतरौ न्यकारयस्ते सहवासं सरलेन कोकिलेन अन्यस्तुत्यान्यस्तुत्यभिव्यक्तिरिति पंचमप्रकारव्याजस्तुतिप्रतिबंदीभूतेयं व्याजनिंदा ननु यत्रान्यस्तुत्यान्यस्तुतेरन्यनिंदयान्यनिंदायाश्च प्रतीतिः तत्र व्याजस्तुतिव्याजनिंदालंकारयोरभ्युपगमे स्तुतिनिंदारूपाप्रस्तुतप्रशंसोदाहरणेष्वप्रस्तुतप्रशंसा न दत्तव्या तेषामपि व्याजस्तुतिव्याजनिंदाभ्यां क्रोडीकारसंभवादिति चेदुच्यते ५

कारताया औचित्यात् तत्त्वाप्राचीनैरनुक्तापि स्वीकर्तुमुचितेत्याशयः प्रागुक्तयोरेकः इतीशंकुं ते चित्वा बहुतरमेत्यनयोरप्रस्तुतप्रशंसोदाहरणत्वासंगतिमाशंकते नन्विति क्रोडीकारः स्वविषयीकरणं अन्यतरलब्धात्मकस्यालंकारद्वयस्य कचित्संकरेपि न दोष इत्याशयेन समाधत्ते ॥

यत्रेति एतच्च इत्यादाविल्यनेनान्वितं अस्याः अप्रस्तुतप्रशंसायाः सैव अप्रस्तुतप्रशंसैव

यत्राप्रस्तुतवृत्तांतात्स्तुतिनिंदारूपात्तत्सरूपः प्रस्तुतवृत्तांतः प्रतीयते अंतश्छिद्राणि भूयांसीत्यादौ तत्र ल ब्धावकाशा सारूप्यनिबंधनाप्रस्तुतप्रशंसा अत्रापि वर्तमाना न निवारयितुं शक्या अन्यस्तुत्याऽन्यस्तुतिरन्यनिंदयान्यनिंदेत्येवं व्याजस्तुतिव्याजनिंदे अपि संभवतश्चेत्का मं ते अपि संभवेतां न त्वस्याः परित्यागः यद्यपि विधिरेव विशेषगर्हणीय इति श्लोके विधिनिंदया तन्मूलकाकनिंदया च विशेषज्ञस्य प्रभोस्तेनन्चविद्वत्समतया स्थापितस्य मूर्खस्य च निंदा प्रतीयत इति तत्र सारूप्यनिबंधनाऽप्रस्तुतप्रशंसाप्यस्ति तथापि सैव व्याजनिंदामूलेति प्रथमोपस्थिता सापि तत्र दुर्वारा एवं च व्याजनिंदामूलकव्याजनिंदारूपेयमप्रस्तुतप्रशंसेति चमत्कारातिशयः एवमेव व्याजस्तुतिमूलकव्याजस्तुतिरूपाप्यप्रस्तुतप्रशंसा दृश्यते यथा वा

लावण्येति इमां तन्वीं तन्वता सृजता वेधसा चेतसि कोऽर्थः कामनाविषयभूतः विनिहितः अभिसंहितः किं प्रयोजनमुद्दिश्येयं निर्मितेत्यर्थः

लावण्यद्रविणव्ययो न गणितः क्लेशो महानर्जितः स्वच्छंदं चरतो जनस्य हृदये चिंताज्वरो निर्मितः एषापि स्वगुणानुरूपरमणाभावाद्वराकी हता कोऽर्थश्चेतसि वेधसा विनिहितस्तन्वीमिमां तन्वता अत्राप्रस्तुतायाम्नरुण्याः सृष्टिनिंदाव्याजेन तन्निंदाव्याजेन च तत्सौंदर्यप्रशंसा प्रशंसनीयत्वेन कविविवक्षितायाः स्वकवितायाः सृष्टिनिंदाव्याजेन तन्निंदाव्याजेन च शब्दार्थचमत्कारातिशयप्रशंसायां पर्यवस्यति अस्य श्लोकस्य वाच्यार्थविषये यद्यपि नात्यंतसामंजस्यं नहीमे विकल्पा वीतरागस्येति कल्पयितुं शक्यं रसाननुगुणत्वात् वीनरागहृदयस्याप्येवंविधविषयेषु प्रवृत्तेश्च नापि रागिण इति युज्यते तदीयविकल्पेषु वराकीति रूपणतालिंगिनस्य हतेत्यमंगलोपहितस्य च वचसोऽनुचितत्वात्तुल्यरमणाभावादित्यस्यात्यंतमनुचितत्वाच्च स्वात्मनि तदनुरूपता संभावनायामपि रागित्वे हि पशुप्रायता स्यात्

नन्वनायासेनातिसुंदरतन्वीनिष्पत्तिरेव प्रयोजनं तदभावेऽपि वा लीलामात्रेणत

न्निर्माणं स्यादत आह लावण्येत्यादि यतो लावण्यरूपस्य द्रविणस्य धनस्य व्ययो न गणितः महान्क्लेशोर्जितः कृतः स्वेच्छाचारिणो जनस्योदासीनस्यापि हृदये चिंतैव ज्वरो निर्मितः एषापि वराकी दीना स्वगुणानुरूपस्य वरस्याभावाद्धतैव हतानष्टप्राया न तथा च बह्वायासमसाध्यत्वादनिष्टानुबंधित्वाच्च न तन्व्याः प्रयोजनत्वं नापि लीलामात्रेण तन्निर्माणं च संभवतीति भावः तन्निंदाव्याजेन तरुणीनिंदाव्याजेन तत्सौंदर्यप्रशंसा शब्दार्थचमत्कारातिशयप्रशंसायां पर्यवस्यतीत्यन्वयः तन्निंदाव्याजेन स्वकवितानिंदाव्याजेन कवितासौंदर्यरूपप्रस्तुतार्थस्यात्यंतमस्फुटत्वात्कथमस्य पद्यस्य तत्सरत्वमित्याशंकामपनेतुं भूमिकामारचयति अस्येत्यादि रसाननुगुणत्वादिति वीतरागे शृंगारस्यासंभवादिति भावः ननु शृंगारासंभवेपि तन्वीनिर्माणनिंदया शांतरसपरिपोषादस्यैव रसानुगुणत्वमत आह वीतरागेति नापि रागिण इत्यनंतरं इमे विकल्पा इत्यनुषज्यते. ·:::·

विवक्षितेति स्वकवितासौंदर्यरूपेत्यर्थः अतएव वाच्यार्थासामंजस्यादेव वाच्यासंभवेपि वाच्यसामंजस्यासंभवेपि तथाच वाच्यार्थासामंजस्य
मेवास्फुटेप्यप्रस्तुतार्थतात्पर्यंगमयतीतिभावः इत्यलंकारचंद्रिकायां व्याजनिंदाप्रकरणं आक्षेपइति स्वयमुक्तस्यार्थस्यकिंचिन्नि

तथापिविवक्षितप्रस्तुतार्थतायां नकिंचिदसामंजस्यं अतएवास्यश्लोकस्याप्रस्तुतप्रशंसा
परत्वमुक्तंप्राचीनैः वाच्यासंभवेप्यप्रस्तुतप्रशंसोपपत्तेरिति आक्षेपः स्वयमुक्तस्यप्रति
षेधोविचारणात् चंद्रसंदर्शयात्मानमथवास्तिप्रियामुखं अत्रप्रार्थितस्यचंद्रदर्शनस्यप्रिया
मुखसत्वेनानर्थक्यंविचार्यअथवेत्यादिसूचितः प्रतिषेधआक्षेपः

मित्तमभिसंधायप्रतिषेधआक्षेपः सूचितेति पक्षांतरपरिग्रहस्यपूर्वपक्षप्रतिक्षेपनियतत्वादितिभावः नचात्रकैमर्थ्यरूपपंचमप्रतीपप्रभेदेनगतार्थत्वंशंकनीयं तस्यात्रप्रतिषेधंप्र
तिनिमित्तत्वेनाप्राधान्यात् ५ ६ ५ ३

असंदिग्धमुदाहरति साहित्येति हे कविश्रेष्ठाः साहित्यसमुद्ररूपाणां भारतादीनां मंथनादिव परिशीलनादुत्थितं उत्पन्नं कर्णयोरमृतमिवाह्लादकं काव्यं रक्षत यद्यस्मात्तस्य लुंठनार्थं दैत्या इव काव्यरूपस्यार्थस्य वित्तस्य चोराः प्रगुणीभवंति बद्धली भवंतीत्यन्वयः गृह्णंत्विति यदि वेत्यथ वेत्य

यथा वा साहित्यपाथोनिधिमंथनोत्थं कर्णामृतं रक्षत हे कवींद्राः यत्तस्य दैत्या इव लुंठनाय काव्यार्थचोराः प्रगुणीभवंति गृह्णंतु सर्वे यदि वा यथेच्छं नास्ति क्षतिः कापि कवीश्वराणां रत्नेषु लुप्तेषु बहुष्वमर्त्यैरद्यापि रत्नाकर एव सिंधुः अत्र प्रथमश्लोकेन प्रार्थितस्य काव्यार्थचोरेभ्यो रक्षणस्य स्वोल्लिखितवैचित्र्याणां समुद्रगतरत्नजालवदक्षयत्वं विचिंत्य प्रतिषेध आक्षेपः निषेधाभासमाक्षेपं बुधाः केचन मन्वते नाहं दूती तनोस्तापस्तस्याः कालानलोपमः केचिदलंकारसर्वस्वकारादय इत्थमाहुः न निषेधमात्रमाक्षेपः किंतु यो निषेधो बाधितः सन् अर्थांतरपर्यवसितः किंचिद्विशेषमाक्षिपति स आक्षेपः

नेन समानार्थं लुप्तेषु अपहृतेषु स्वोल्लिखितेति स्वयमुद्भावितेत्यर्थः वैचित्र्याणां अर्थवैचित्र्याणां अर्थांतरपर्यवसितः अर्थांतरप्रतियोगिकत्वेनावस्थितः विशेषं व्यंग्यार्थविशेषं ॥

संघटनेति· संयोजनकाले उचितं यत्कैतववचनं मिथ्यावचनं तस्य परिहारस्तेनोपलक्षिते यथार्थवादित्वे इत्यर्थः नाहं दूतीत्यत्र हि दूतीपदे
न दूतीगतमिथ्यावादित्वविशिष्टं लक्ष्यते तदभावस्तु यद्यपि न यथार्थवादित्वं तथापि तदुपलक्ष्यत्वात्तत्पर्यवसानोक्तिः नरेंद्रेति संधिकरणा

यथा दूत्या उक्तो नाहं दूतीति निषेधो बाधितत्वादाभासरूपः संघटनकालोचितकैतववचनपरिहारेण यथार्थवादित्वे पर्यवस्यन्निदानीमेवागत्य नायिकोज्जीवनीयेति विशेषमाक्षिपति यथावा नरेंद्रमौले नवयं राजसंदेशहारिणः जगत्कुटुंबिनस्ते द्य न शत्रुः कश्चिदीक्ष्यते अत्र संदेशहारिणामुक्तो नवयं संदेशहारिण इति निषेधोनुपपन्नः संधिकालोचितकैतववचनपरिहारेण यथार्थवादित्वे पर्यवस्यन्सर्व जगतीपालकस्य तव न कश्चिदपि शत्रुभावेनावलोकनीयः किंतु सर्वेपि राजानो भृत्यभावेन संरक्षणीया इति विशेषमाक्षिपति

र्थमागतानां दूतानामुक्तिः नरेंद्राणां राज्ञां मौलिः श्रेष्ठः संधीति संधिकाले उचितं यत्कैतववचनं त
त्परिहारेणोपलक्षिते इति पूर्ववदर्थः अत्राङ्कः संदेशहारिषु तन्निषेधस्य बाधात् संदेशहारिपदेन कैतववचनप्रयोक्तृत्वविशिष्टं लक्ष्यते तन्निषे

धेनवसत्यवादित्वरूपो विशेषो व्यज्यते इत्ययमेव निषेधेन विशेषाक्षेपो न तु सर्वजगतीपालकत्वादिर्विशेषो निषेधेन केवलेनाक्षेप्तुं शक्यते तस्यज गत्कुटुंबिन इत्युत्तरार्धगम्यत्वात् एवंस्थिते कथमुच्यते न वयं कश्चिदपीत्यादीति तत्रोच्यते नवयमिति निषेधाभावे केवलादुत्तरार्धान्नोक्तविशे षावगतिः स्यात् संधिकालोचितके तववचनत्वेनैव संभाव्यमानत्वात् अपितु तत्कालीनसंध्यभिप्रायमात्रावगमः निषेधेन तु तत्परिहारे युक्त उक्तविशेषावगम इत्यनुभवसाक्षिकमेतत् सत्यवादित्वादिकं तूक्तविशेषे व्यंजनीये द्वारभूतं न तु तदेव विशेषरूपमचमत्कारित्वात् अतएव ना

आक्षेपोन्यो विधौ व्यक्ते निषेधे च तिरोहिते गच्छगच्छसि चेत्कांत तत्रैव स्याज्जनिर्मम अत्र गच्छेति विधिर्व्यक्तः मागा इति निषेधस्तिरोहितः कांतो द्देश्य देशे निजजन्मप्रार्थनया त्वमरणसंसूचनेन गर्भीकृतः यथावा नचिरं मम तापाय तव यात्रा भविष्यति यदि यास्यसि यातव्यमलमाशंकयापि ते अत्रापि नचिरं मम तापायेति स्वमरणसंसूचनेन गमननिषेधो गर्भीकृतः

हं दूतीत्यत्र वस्तुवादित्वादिर्विशेषो व्यज्यत इत्यलंकारसर्वस्वकारः वस्तुवादित्वमादिद्वारिभूतं यस्य तादृशो विशेष इति तदर्थ इति एतेन नाहं दूतीति पूर्वोदाहरणमपि व्याख्यातं अस्यैव प्रभेदांतरमाह आक्षेपोन्य इति प्रार्थनया मरणसूचनद्वारेण गर्भितः व्यंग्यत्वेनांतर्भावितः एतच्च तिरो हित इत्यस्यार्थकथनं तदेवमपह्नुतिभिन्नत्वे सति चमत्कारकारिनिषेधत्वं सामान्यलक्षणं बोध्यं इत्यलंकारचंद्रिकायामाक्षेपालं-कारप्रकरणं ॥

आभासत्वं इति विरोधस्य आभासत्वे आपाततो भासमानत्वे सति विरोधाभासो नामालंकारः आभामत इत्याभासः विरोधश्चासावाभासश्चेति व्युत्पत्तेः ईषदर्थकेन चांऽऽभानस्यापातरूपत्वमर्थान्निरपरिहार्यत्वरूपं बोध्यते तथाचैकाधिकरण्येन प्रतीयमानयोः कार्यकारणत्वेनागृह्यमाणयोर्धर्मयोराभासमानाः पर्यवसन्नविरोधत्वं लक्षणं द्रष्टव्यं शनिरशनिश्च तमुच्चैरित्यादावतिव्याप्तिवारणायाद्यं विशेषणं अप्यलाक्षारसासिक्तं रक्तं

आभासत्वे विरोधस्य विरोधाभास इष्यते विनापि तन्विहारेण वक्षोजौ तव हारिणौ

अत्र हाररहिताचपि हारिणोत्थयाविति श्लेषमूलको विरोधाभासः यथावा ३

तच्चरण द्वयमिति विभावनावारणाय द्वितीयं पर्यवसितस्य विरोधस्य दोषत्वादपर्यवसन्नत्वं विरोधविशेषणमितिदिक् श्लेषेति हारोऽनयोरस्तीत्यर्थे विरोधः मनोहारिणावित्यर्थेन तत्परिहारः ६ ७

प्रतीपेति तस्मान्नलात् भयेन कृत्वा प्रतिकूलनृपैरिव विरुद्धधर्मैरपि भेत्तृताभेदकारिता त्यक्ता किमित्युत्प्रेक्षा यस्मात्स नलः अमित्राणां शत्रूणां जयकृदपि ओजसा मित्रस्य रवेर्जयिकृत् अथच मित्रजिदेव नमित्रजिदिति विरोधः चारदृष्टिरपि विचारिदृष्टिर्यस्य तादृशः विगतचारदृगिति च विरोधः विरोधेति विरोधसमाधानरूपोत्प्रेक्षा शिरः प्रधानं यस्य तादृश इत्यर्थः अत्र तु विरोधसमाधानात्मिकया मुखस्थितयोत्प्रेक्षया विरोधस्यो

प्रतीपभूपैरिव किं ततो भिया विरुद्धधर्मैरपि भेत्तृतोज्झिता अमित्रजिन्मित्रजिदोजसा स यद्वि
चारदृक्चारदृगप्यवर्तत अत्र विरोधसमाधानोत्प्रेक्षाशिरस्को विरोधाभास इति पूर्वस्माद्भेदः ७

त्थानमेव भग्नमिति कथमत्र विरोधालंकार इति केनचित्तु मनसापि विमनसेवाभिहितं तदसारं विरोधभानमंतरेण विरुद्धधर्मैरपीत्याद्युत्प्रेक्षा-
या एवानुत्थानेन श्लेषमूलमाभासमानं विरोधमुपजीव्यैव विरोधत्यागोत्प्रेक्षाया अर्थांतरानुगृहीतायास्तत्समाधानत्वेन पश्चादवस्थितत्वादिति
इत्यलंकारचंद्रिकायां विरोधप्रकरणं ७ ७

विभावनेति प्रसिद्धकारणाभावेपिकार्योत्पत्तिर्विभावनालंकारः विभाव्यते कारणांतरं यस्यामिति व्युत्पत्तेः कारणाभावश्च शाब्द आर्थो वेति सर्वत्र लक्षणसमन्वयो बोध्यः एतदेवतंत्रेण सकलविभावनाप्रकारसाधारणं सामान्यलक्षणमाद्यप्रकारविशेषलक्षणं च बोध्यं तत्राद्यं दर्शितमेव द्वितीयं तु कारणान्वितताभावकथनपूर्वकं कार्योत्पत्तिकथनमित्युदाहरणविशेषबलादेवगम्यत इति विविच्य न दर्शितं प्रतिबंधके सतिकार्योत्पत्तिरूपे तृतीयप्रकारे ऽतिव्याप्तेर्वारणायान्वितेति तत्र प्रतिबंधकस्य वस्तुतः कारणाभावरूपस्य कथनेपि न कारणान्वितत्वेन कथनमिति तन्निरासः

विभावना विनापि स्यात्कारणं कार्यजन्म चेत् अप्यलाक्षारसासिक्तं रक्तं त्वच्चरणद्वयं अत्र लाक्षारसासेकरूपकारणाभावेपि रक्तिमा कथितः स्वाभाविकत्वेन विरोधपरिहारः यथावा अपीतक्षीबकादंबमसंमृष्टामलांबरं अप्रसादितसूक्ष्मांबु जगदासीन्मनोरमं

प्रकारपंचकेपि कारणान्वितताभावस्यार्थतोगम्यत्वात्कथनेति अप्यलाक्षेति लाक्षारसेन आसमंतात्सिक्तं लाक्षारसासिक्तं पश्चान्नञ्समासः तस्याः कामिन्याः अपीतेति अपीताः पानशून्याः क्षीबा मत्ताः कादंबाः कलहंसा यत्र तथा असंमृष्टं संमार्जनशून्यममलमंबरमाकाशं यत्र एवमप्रसादितं वस्त्रगालनकनकक्षोदप्रक्षेपादिना यत्प्रसादनं तच्छून्यं सूक्ष्मं लघ्वंबु यत्रैवंभूतं जगन्मनोहरमासीदित्यन्वयः परमार्थतस्तु शुद्धा विस्येवकाव्यादर्शे दृष्टः पाठः ७

विभाव्यमानेति वर्ण्यमानेत्यर्थः वर्गेति वरतनोः कबरीभारचनासंपादकेन अतएवसुरभिनखेन शशांकहस्तेन अवचितकुसुमाल्लेन पुष्पापि

अत्रपानादिमभिप्रेतहेत्वभावेपिक्षीबत्वादिनिबद्धं विभाव्यमानत्वात्समयहेतुकत्वेनविरोधपरिहारः यथावा
वरतनुकबरीविधायिनासुरभिनखेननरेंद्रपाणिना अवचितकुसुमापिवल्लरीसमजनिवृंतनिलीनषट्पदा
अत्रवल्लर्यांपुष्पाभावेपिभृंगालिंगनंनिबद्धंतत्रवरतनुकबरीसंक्रांतसौरभनरपतिनखसंसर्गरूपंहेत्वंतं
रंविशेषणमुखेनदर्शितमितिविरोधपरिहारः हेतूनामसमग्रत्वेकार्योत्पत्तिश्चद्वितीयासामता अस्त्रैरतीक्ष्णकठि
नैर्जगज्जयतिमन्मथः अत्रजगज्जयेसाध्येहेतूनामस्त्राणामसमग्रत्वंतीक्ष्णत्वादिगुणवैकल्यं यथावा
उद्यानमारुतोद्धूताश्चूतचंपकरेणवः उदस्रयंतिपांथानामस्पृशंतोविलोचने अत्रबाष्पोद्गमनहेतूनाम
समग्रत्वंस्पर्शनक्रियावैकल्यं

तावृंतासक्तभ्रमरामंजानेत्यर्थः हेतूनामिति असमग्रत्वे हेतुतावच्छेदकस्यधर्मस्यतत्संबंधस्य
वावैकल्येसति अस्त्रैरितिधर्मवैकल्योदाहरणंसंबंधवैकल्यउदाहरति उद्यानेति विलोचनेकर्मभूते उदस्रयंति उद्गताश्रूणिकुर्वंतीत्यर्थः क्रियेतिधा

इमां द्वितीयप्रकाररूपां विभावनां व्याजहारेति गुणजातिक्रियादीनां यत्र वैकल्यदर्शनं विशेषदर्शनायैव सा विशेषोक्तिरिष्यत इति ग्रंथेन व्यव
हृतवानित्यर्थः एतेन प्रथमप्रकाराद् द्वितीयप्रकारस्य वैलक्षण्यं दुरुपपादमिति वदन्नपास्तः वैलक्षण्याभावे हि प्राचामलंकारांतरत्वेन कथन
मसंगतानुपपन्नमेव स्यात् अस्ति च स्वरूपतः कारणाभावकथनात्कारणगतधर्मवैकल्यद्वारेण तद्विशिष्टकारणाभावकथने सत्द्वयासिद्धो विच्छि

इमां विशेषोक्तिरिति दंडी व्याजहार यतस्तत्र प्रथमोदाहरणे मन्मथस्य महिमातिशयरूपो द्वितीयोदाहरणे चंप
करेणूनां मुर्द्धायकतानिशायरूपश्च विशेषः ख्याप्यत इति अस्माभिस्तु तीक्ष्णत्वादिवैकल्यमपि कारणविशेषाभा
वरूपमिति विभावना प्रदर्शिता कार्योत्पत्तिस्तृतीयास्यात्सत्यपि प्रतिबंधके नरेंद्रानेव ते राजन्दशत्यसिभुजंगमः
अत्र नरेंद्रा विषवैद्याः सर्पदंशप्रतिबंधकमंत्रौषधिशालिनः श्लेषेण गृहीता इति सत्येव प्रतिबंधके कार्योत्पत्तिः ६

त्ति विशेषः प्रकारांतरासीकारे लाघवमिति तुरीयलाघवो ज्ञानमिति ह्रस्वमधिकेन कार्योत्पत्तिरिति प्रतिबंधके सत्यपि कार्योत्पत्तिकथनं तृती
या विभावना नरेंद्रानिति नरेंद्रो वार्त्तिके राज्ञि विषवैद्येपि कथ्यत इति विश्वः असिः खड्ग एव भुजंगमः ६ ॥ ६९

चित्रमिति प्रतापएवतपनः सूर्यः आतपत्रंछत्रंतद्रहितमनातपत्रं आतपत्रेणसहितंसातपत्रं उदितइति कस्यचिद्राजकुमारस्यप्रतापवर्णनं
कुमाररूपेसूर्यउदितेसतिकोः पृथिव्यावलयंमंडलमेवकुवलयंकुमुदमुल्लासंप्राप्नोति क्षत्रंक्षत्रियकुलंनभाति अथचनक्षत्रंभानीतिचित्रंत

यथावा चित्रंनृपतिराजेंद्रप्रतापतपनस्तव अनातपत्रमुत्सृज्यसातपत्रंद्विषद्गणं अकारणात्का
र्यजन्मचतुर्थीस्याद्विभावना शंखाद्वीणानिनादोयमुदेतिमहदद्भुतं अत्रशंखत्वेनकमनीयःकामि
नीकंठस्तंत्रीनिनादत्वेनतद्गीतंचाध्यवसीयतद्रूपकारणात्कार्यजन्म यथावा तिलपुष्पात्समायातिवा
युश्चंदनसौरभः इंदीवरयुगाच्चित्रंनिःसरंतिशिलीमुखाः विरुद्धात्कार्यसंपत्तिर्दृष्टाकाचिद्विभावना
शीतांशुकिरणास्तन्वींहंतसंतापयंतितां अत्रतापनिवर्तकतयातापविरुद्धेरिंदुकिरणैस्तापजनिरुक्ता
यथावा उदितेकुमारसूर्येकुवलयमुल्लसतिभातिनक्षत्रं मुकुलीभवंतिचित्रंपरराजकुमारपाणिपद्मानि

थापरेषांराजकुमाराणांपाणिकमलानिमुकुलीभवंतिसंकुचंति अंजलिबंधात्तदाकृतीनिभवंतीत्यर्थः ६९

अविवेकीति विवेको विशेषदर्शनं विश्लेषश्च तच्छून्यं परस्परं संश्लिष्टत्वात् कुचयुगं कर्तृ जगत्त्रयं हंतु नाम श्रुतिर्वेदः कर्णश्च प्रणयः परिच
यः यशाइति करएवदातृत्वात्कल्पतरुः अत्र पयोधिजन्यात्कल्पतरोः कारणस्य पयोधेरुत्पत्तिः षष्ठी विभावना जातेनिजातु कदाचित्क

यथा वा अविवेकि कुचद्वंद्वं हंतु नाम जगत्त्रयं श्रुतिप्रणयिनो रक्ष्णोरयुक्तं जनमारणं पूर्वेद्राहरणयोः कार
णस्य कार्यविरोधित्वं स्वाभाविकं इह तु श्रुतिप्रणयित्वरूपागंतुकगुणप्रयुक्तमिति भेदः कार्यात्का
रणजन्मापि दृष्टा काचिद्विभावना यशः पयोराशिरभूत्करकल्पतरोस्तव यथा वा जाता लताहि शै
ले जातु लतायां न जायते शैलः संप्रति तद्विपरीतं कनकलतायां गिरिद्वयं जातं कार्याजनिर्विशे
षोक्तिः सति पुष्कलकारणे हृदि स्नेहक्षयो नाभूत्स्मरदीपे ज्वलत्यपि

नकलतेव कनकलता कामिनी गिरिद्वयमिवस्त
नद्वयं इत्यलंकारचंद्रिकायां विभावनाप्रकरणं विशेषोक्तिं लक्षयति कार्याजनिरिति पुष्कले सहकारिसंपन्ने कारणे सति
प्रसिद्धकारणसमूहे सतीति यावत्कार्यस्याजनिरनुत्पत्तिर्विशेषोक्तिः विशेषस्य अनुत्पत्तिनिमित्तस्योक्तिरवगतिर्यत्रेति व्युत्पत्तेः ७

अनुरागेति अनुरागो रक्तिमा रतिश्च पुरःसरो ऽग्रवर्ती आज्ञाकरश्च पूर्वेदाहरणेनुक्तनिमित्ता इह दैवगतिवैचित्र्यस्य निमित्तस्योपादाना दुक्तनिमित्तेति भेदः इति विशेषोक्तिप्रकरणं असंभव इति कस्यचित्पदार्थस्य निष्पत्तेरसंभावनीयत्ववर्णनमसंभवो नामालंकारः गोपशिशुकः गोपालबालकः निंदायां स्वार्थे वा कप्रत्ययः उत्पाटयेत् उद्धरेत् अयमिति वारां जलानां निलयः स्थानं तृष्णा पिपासा अर्थाभिलाषश्च तरलितं चंचलीकृतं श्रितः आश्रितः मुनिरगस्त्यः एनं समुद्रं क्षणात् आसमंतात् पास्यति इदं को जानीत इत्यन्वयः कीदृशं निजकरपुटीकरसंपुटमेव कोटरं बिलं तद्गतं तथा ताम्यंतो ग्लायंतस्तिमयो मत्स्या मकराश्च यस्य एवंभूतमित्यर्थः इत्यसंभवालंकारप्रकरणं ७ ७ ७

यथा वा अनुरागवती संध्या दिवसस्तत्पुरःसरः अहो दैवगतिश्चित्रा तथापि न समागमः
असंभवोर्थनिष्पत्तेरसंभाव्यत्ववर्णनं को वेद गोपशिशुकः शैलमुत्पाटयेदिति अयं वारामेको
निलय इति रत्नाकर इति श्रितोस्माभिस्तृष्णातरलितमनोभिर्जलनिधिः क एवं जानीते निजकरपु
टीकोटरगतं क्षणादेनं ताम्यत्तिमिमकरमापास्यति मुनिः

विरुद्धमिति अदृष्टमित्यर्थः भिन्नदेशत्वं भिन्नाधिकरणत्वं विषंजलं हालाहलंच संगतस्यभावः सांगत्यं तदभावोऽसांगत्यं अजस्रमिति दमयंती
नं हंसोक्तिः हेदमयंतित्वंतदीयां नलसंबंधिनीं दूरमत्यंतं दीर्घासंकल्पोमनोरथस्तद्रूपसोपानपरंपरां अजस्रं निरंतरमारोहसि सपुनर्नलः अधिकं

विरुद्धं भिन्नदेशत्वं कार्यहेत्वोरसंगतिः विषंजलधरैः पीतं मूर्छिताः पथिकांगनाः यर्योः का
र्यहेत्वोर्भिन्नदेशत्वं विरुद्धनयोरुन्निबध्यमानमसंगत्यलंकारः यथात्र विषपानमूर्छयोर्भिन्न
देशत्वं यथावा अहोखलभुजंगस्य विचित्रोयंवधक्रमः अन्यस्य दशति श्रोत्रमन्यः प्राणै
र्वियुज्यते क्वचिदसंगतिसमाधाननिबंधनेनचारुतातिशयः यथावा अजस्रमारोहसि
दूरदीर्घासंकल्पसोपानततिंतदीयां श्वासान्सवर्षत्यधिकं पुनर्यद्ध्यानात्तवतन्मयतामवाप्य
विरुद्धमिति विशेषणाद्यत्र कार्यहेत्वोर्भिन्नदेशत्वं नविरुद्धं तत्र नासंगतिः ७

श्वासान्वर्षति मुंचतीति यन्नल वध्यानात्तन्मयतां तत्स्वरूपतामवाप्येत्यन्वयः अत्रचतुर्थपादेनासंगतिसमाधानं ॥

६५

भ्रूचापेति भ्रूचापवल्ली भ्रूस्वरूपधनुर्लतां यावदिति परिमाणार्थं वक्रतां नयति आकर्षतीति यावत् तावत्परिमाणं हृदयं भिद्यत इत्यर्थः अत्र हृदयभेद धनुराकर्षणयोः कार्यकारणयोर्भिन्नदेशत्वमेव दृष्टमिति नासंगतिरलंकारः अन्यत्रेति अन्यत्र कर्तव्यस्य वस्तुनस्ततोन्यस्मिन्नधिकरणे या कृतिः करणं तदपि असंगतिरित्यनुषज्यते तथा अन्यत्कार्यं कर्तुं प्रवृत्तस्य तद्विरुद्धकार्यकरणं तृतीया असंगतिः अ

यथा भ्रूचापवल्लीसुमुखी यावन्नयति वक्रतां तावत्कटाक्षविशिखैर्भिद्यते हृदयं मम अन्यत्र करणीयस्य ततोन्यत्र कृतिश्च सा अन्यत्कर्तुं प्रवृत्तस्य तद्विरुद्धकृतिस्तथा अपारिजातां वसुधां चिकीर्षं द्यां तथाकृथाः गोत्रोद्धारप्रवृत्तोपि गोत्रोद्भेदं पुराकरोः अत्र कृष्णं प्रति शक्रस्य सोपालंभवचने भुविदिवि कीर्षित तया तत्र करणीयं अपारिजातत्वं दिवि कृतमित्येका संगतिः पुरा गोत्राया उद्धारे प्रवृत्तेन वराहरूपिणा तद्विरुद्धं गोत्राणां दलनं खुरकुट्टनैः कृतमिति द्विविधापि श्लेषोत्थापिता ६

पगतमरिजातं यस्यास्तां द्यां स्वर्गं तथा पारिजाततरुरहितां अकृथाः कृतवान् एवं गोत्रायाः पृथिव्या उद्धाराय पुरा वराहावतारे प्रवृत्तोपि त्वं गोत्राणां पर्वतानामुद्भेदं दलनमकरोः कृतवानित्यर्थः श्लेषोत्थापिता श्लेषमूलकाभेदाध्यवसायोत्थापिता ६

यथावेति, हे भुवनैकवीर चोलदेशाधिपसिंहसदृश नवखड्गेन खंडिता ये सपत्नाः शत्रवस्तद्विलासिनीनामभिनवा अदृष्टपूर्वा भूषाभूषणानि भ

यथावा त्वत्खड्गखंडितसपत्नविलासिनीनां भूषाभवंत्यभिनवा भुवनैकवीर नेत्रे
षु कंकणमथोरुषु पत्रवल्ली चोलेंद्रसिंह तिलकं करपल्लवेषु मोहं जगत्त्रयभुवामप
हतुमेतदाद्यरूपमसि त्वेश्वरदेहभाजां निःसीमकांतिरसनीरधिनामुनैव मोहं
मनुर्द्दयासि मुग्धविलासिनीनां अत्रायोदाहरणे कंकणादीनामन्यत्र कर्तव्यत्वं भसि
द्धमिति नोपन्यस्तं भवतिना भावनारूपा अन्यत्र कृतिराक्षिप्यत इति लक्षणानुगतिः

वंति यथा नेत्रेषु कंकणं ... कंकणं ... भवतीत्यनुषंगः अथेति समुच्चये ऊरुषु च पत्रयुक्ता वल्ली सैव पत्रिकारचना करपल्लवे

पुतिलयुक्तं कंजलमेवललाटभूषणमिति मोहमिति हे अखिलेश्वर जगत्त्रयवर्तिनां देहधारिणां मोहमपनेतुं एतत्रूपं कृष्णशरीरमादाय
मर्यादानिक्रांतकांतिरूपरससमुद्रेणामुनेवरूपेण सुंदरस्त्रीणां मोहं प्रवर्द्धयसीत्यन्वयः अत्रेति अनयोर्मध्य इत्यर्थः आद्योदाहरणे इति ल
क्षणानुगतिरित्यन्वयः भवतिना भवत्यर्थेन भवनेनेति यावत् भावनारूपा भवनप्रयोजकव्यापाररूपा यत्तु अन्यत्रकरणीयस्येत्याद्यसंगति
प्रकारद्वयांतरकथनमयुक्तं अपारिजातामित्युदाहरणे पारिजातराहित्यचिकीर्षारूपकारणस्य कार्येण पारिजातराहित्येन वैयधिकरण्यो
पनिबंधनेन प्राथमिकासंगतितो वैलक्षण्यानुपपत्तेः आलंबनाख्यविषयतासंबंधेन चिकीर्षायाः सामानाधिकरण्येन कार्यमात्रं प्रति हेतुत्वात्
एवं नेत्रेषु कंकणमित्यादौ कंकणत्वनेत्रालंकारत्वयोर्विरुद्धयोः सामानाधिकरण्यवर्णनाद्विरोधाभासत्वमुचितं एवं गोत्रोद्धारप्र-
दत्तोपीत्युदाहरणे विरुद्धात्कार्यसंपत्तिर्दृष्टा काचिद्विभावनेत्युक्तविभावनाप्रकारेणैव गतार्थत्वादसंगतिभेदांतरकल्पनानुचिता मोहमित्यादा
वपि मोहनिर्वर्तकत्वमोहजनकत्वयोर्विरुद्धयोरेकत्रवर्णनाद्विरोधाभास एवेति केश्चिदुक्तं तदसंगतं उक्तसंबंधेन चिकीर्षाया हेतुत्वासिद्धेः
नहि यदधिकरणे कार्यचिकीर्षा तदधिकरणमंतर्भाव्योक्तसंबंधेन चिकीर्षायाः कार्यहेतुत्वं तांत्रिकसंमतं युक्तं वा अन्यत्र चिकीर्षितस्यापि प्रमा
दादिनान्यत्रकरणे व्यभिचारात् अत एवैवंविधवैयधिकरण्यस्य विरुद्धत्वादपि न प्राथमिकासंगत्यंतर्भावसंभवः वस्तुतस्तु विषं जलधरैः
पीतं मूर्छिताः पथिकांगना इत्यत्रेव नात्र कार्यकारणवैयधिकरण्यप्रयुक्तो विच्छित्तिविशेषोऽपि त्वन्यत्र कर्तव्यस्यान्यत्र करणप्रयुक्त एवेति स्वल्पद

प्रमेयप्रष्टव्यं एवंनेत्रेषु कंकणमित्यत्रसत्यपि विरोधाभासेऽन्यत्रचमत्कारित्वेन कुसालंकारभावोऽन्यत्रकर्त्तव्यस्यान्यत्रकरणरूपाऽसंगतिरपि
प्रतीयमानानशक्यानिराकर्त्तुं एवंगोत्रोद्धारप्रवृत्तोऽपीत्युदाहरणेगोत्रोद्धारविषयकप्रवृत्तेर्गोत्रोद्भेदरूपकार्यविरुद्धत्वाद्विरुद्धकार्यसंपत्तिरपिवि
भावनेत्यपिनयुक्तं गोत्रोद्धारप्रवृत्तेर्गोत्रोद्भेदनिवर्तकत्वाभावेनतद्विरुद्धत्वाभावात् कथंचित्तदभ्युपगमेपि अन्यत्कार्यंकर्त्तुंप्रवृत्तेनतद्विरुद्धकार्यां
तरकरणरूपाऽसंगतिरपिमोहञ्जगत्त्रयभुवामित्यादौचमत्कारित्वेनलब्धात्मिकाननिवारयितुंशक्यते नचात्रापिमोहनिवर्त्तकान्मोहोत्पत्तेःसैव
विभावनेतिवाच्यं मोहनिवर्तकस्यसिद्धवदप्रतीतेः अतएवनविरोधाभासोपिविशेषोक्तिकथनंत्वत्रासंगतमेव नहिगोत्रोद्धारविषयकप्रवृत्तिरूप
कारणसत्वेपिगोत्रोद्धाररूपस्यकार्यस्यानुत्पत्तिरिहप्रतिपाद्यते किंतुविरुद्धकार्योत्पत्तिरेवेतिविभावनीयम् इत्यसंगतिप्रकरणम्

विषममिति परस्परमानुरूप्यरहितयोः पदार्थयोर्यत्र घटनासंबंधो वर्ण्यते तत्र विषमंनामालंकारः संबंधश्च संयोगादिः उत्पाद्योत्पादकभावश्चेति स
र्वप्रकारसाधारणमेतल्लक्षणंबोध्यं अभिलषसीति अंके कलंकं संक्षाल्य प्रक्षाल्य अथप्रक्षालनानंतरं नोचेत्तस्यामुखं क्व त्वं क्व इति वदेत्यन्वयः
वस्तुसती वस्तुगत्या विद्यमाना चंद्रेति चंद्रश्च वदनलक्ष्मीश्च तयोरित्यर्थः विरूपकार्यस्येति कारणविलक्षणस्वरूपस्येत्यर्थः कृपाणिका खड्गः प्रक्र

विषमं वर्ण्यते यत्र घटनाननुरूपयोः केयं शिरीषमृद्वंगी क्व तावन्मदनज्वरः अत्रातिमृदुत्वेनाति
दुःसहत्वेन चाननुरूपयोरंगनामदनज्वरयोर्घटना यथा वा अभिलषसि यदीदोवक्त्रलक्ष्मीं मृगाक्ष्याः पु
नरपि सकृदब्धौमज्जसंक्षाल्यांकं सुविमलमथ बिंबं पारिजात प्रसूनैः सुरभय वदनो चेत्त्वं क्व तस्यामु
खं क्व पूर्वत्र वस्तुसती घटना अत्र च चंद्रवदनलक्ष्म्योस्तर्किता घटनेति भेदः विरूपकार्यस्योत्पत्तिरपरं विष
मं मतं कीर्तिं प्रसूते धवलां श्यामा तव कृपाणिका अत्र कारणगुणप्रक्रमेण विरुद्धाच्छामाद्धवलोत्पत्तिः
कार्यकारणयोर्निवर्त्यनिवर्तकत्वे पंचमी विभावना विलक्षणगुणशालित्वे त्वयं विषम इति भेदः

मेणेति प्रक्रमः परिपाटीस्वसजातीयकार्यगुणोत्पादकत्वरूपा विरुद्धकार्यसंपत्तिरिति पंचमविभावनाप्रकारेणाभेदमाशंक्याह कार्येति अयं विषमः
उक्त विषमालंकारप्रभेदः तृतीयप्रकारमाह

अनिष्टस्यापीति अपि भिन्नक्रमः इष्टार्थसमुद्यमात् अनिष्टस्यावाप्तिरपि च तत्तु विषममित्यर्थः अपिनाइष्टानवाप्तिः संगृह्यते चकारः पूर्वोक्तविषमसमुच्चयार्थः भक्ष्येति अहिमंजूषां सर्पपेटिकां दृष्ट्वा भक्ष्यस्याशया प्रविष्ट आखुर्मूषकस्तेनाहिना भक्षित इत्यन्वयः यत्तु प्रविष्ट इत्यस्यागम्यमानत्वान्न्यूनपदत्वमिति केनचिदुक्तं तदभिनिवेशादुष्टस्वहृदयानुभवविकत्थनमित्युपेक्षणीयं अनिष्टस्यापि प्रतिलंभ इत्यत्राप्यपिर्भिन्नक्रमो बोध्यः गोपाल इति हे

अनिष्टस्याप्यवाप्तिश्च तदिष्टार्थसमुद्यमात् भक्ष्याशयाहिमंजूषां दृष्ट्वाखुस्तेन भक्षितः इष्टार्थमुद्दिश्य किंचित्कर्मारब्धवतो न केवलमिष्टस्यानवाप्तिः किंतु ततोऽनिष्टस्यापि प्रतिलंभश्चेत्तदपि विषमो यथा भक्ष्यप्रेप्सया सर्पपेटिकां दृष्ट्वा प्रविष्टस्य मूषकस्य न केवलं भक्ष्यालाभः किंतु स्वरूपहानिरपीति यथा वा गोपाल इति कृष्ण त्वं प्रचुरक्षीरवांछया श्रितो मातृस्तनक्षीरमप्यलभ्यं त्वयाकृतं इदमर्थावाप्तिरूपेष्टार्थसमुद्यमादिष्टानवाप्त्यावनिष्टप्रतिलंभे चोदाहरणं अनर्थपरिहारार्थरूपेष्टार्थसमुद्यमात्तदुभयं यथा

कृष्ण त्वं गोपाल इति हे तोर्बहुदुग्धवांछया श्रितः आश्रितः त्वया तु मातृस्तनदुग्धमप्यलभ्यं कृतं मुक्तिदानेनेति भावः पूर्वत्रेष्टानवाप्तिरर्थगम्या इह तु पिशब्दगम्येति विशेषः इदमिति उदाहरणमिति च आताधेकवचनं

दिवीति भुवि सैंहिकेयस्य सिंहीपुत्रस्य राहोस्तस्य भयात् दिवि आकाशे चंद्रमाश्रितवतः शशस्य साश्रयस्याश्रयसहितस्य ततः सैंहिकेयाद्राहो
र्भयमेतत् हेतन्वंगिपदस्येत्यन्वयः परानि परस्यानिष्टावाप्तिरूपाय इष्टार्थ इत्यर्थः तदुभयं इष्टानवाप्त्यनिष्टावाप्तिद्वयं दिधक्षन्निति दशाननोरावे
णः मारुतेर्हनुमतो वालपुच्छं दग्धुमिच्छन् वालमादीप्य दीपयति स्मेत्यर्थः प्रत्येकमपीति अपिना इष्टानवाप्तिसमुच्चितायाः अनिष्टावाप्तेर्विषमपदेनान्व

दिविश्रितवतश्चंद्रं सैंहिकेयभयाद्भुवि शशस्य पश्यतन्वंगि साश्रयस्य ततो भयं अत्र न केवलं शशस्य स्वान
र्थपरिहरानवाप्तिः किंतु साश्रयस्याप्यनर्थावाप्तिरिति दर्शितं परानिष्टप्रापणरूपेष्टार्थसमुद्यमात्तदुभयं यथा दि
धक्षन्मारुतेर्वालं तमादीप्य दशाननः आत्मीयस्य पुरस्यैव सद्योदहनमन्वभूत् पुरस्यैवेत्येवकारेण परानिष्टप्राप
णाभावो दर्शितः अनिष्टस्याप्यवाप्तिश्चेति श्लोके निष्टावाप्तेरपिशब्दसंगृहीताया इष्टानवाप्तेश्च प्रत्येकमपि विष
मपदेनान्वयः ततश्च केवलानिष्टप्रतिलंभः केवलेष्टानवाप्तिश्चेत्यन्यदपि विषमद्वयं लक्षितं भवति तत्र केवला
निष्टप्रतिलंभो यथा

यः समुच्चीयते विषमपदेन विषमपरामर्शकेन तत्पदेन तथा च तात्पर्यबलाद्वाक्यमावर्तनीयमिति भावः यत्वनिष्टस्येव तदुत्तरापिशब्दसमुच्चिताया इ
ष्टानवाप्तेरप्याप्तोति नैवान्वयो न तु तत्पदपरामृष्टेन विषमेण अव्युत्पत्तेरिति तत्प्रागेवापिशब्दान्वयव्याख्यानेन निरस्तं वेदितव्यं

पद्मेति दयितां प्रति नायकोक्तिः पद्मस्यानपत्रं छत्रं तत्र रसिके हे तन्वि वापिकायां सरसीरुहस्य पद्मस्य कंदमर्पयितुं किमिति इच्छसि यतः
कलियुगरूपः कालः इदं जगत् कृतघ्नं च न भवति ततः किं तत्राह इदं सरसीरुहं स्थित्वा न वैव मुखस्य लक्ष्मीं हरिष्यति तन्वन्यस्या इत्यर्थः
मेति विभ्रमः धारयामः वदत्सु गोपेषु शिथिलो भुजो यस्य सः भरेण शैलभारेण भुग्नावक्राः विनता विस्तीर्णा बाहवो येषां तथाभूतेषु सत्सु

पद्मानपत्ररसिके सरसीरुहस्य किं बीजमर्पयितुमिच्छसि वापिकायां कालः कलिर्जगदिदं न कृतज्ञमेतत् स्थित्वा हरिष्यति मु-
खस्य न वै च लक्ष्मीं अत्र पद्मा नपत्रलिप्सया पद्मबीजावापं कृतवत्यास्तल्लाभोऽस्त्येव किंतु मुखशोभाहरणरूपोत्कटानिष्टप्राप्ति-
लंभः केवलेष्टानवाप्तिर्यथा खिन्नोऽसि मुंच शैलं बिभृमो वयमिति वदत्सु शिथिलभुजः भरभुग्नवितनबाहुषु गोपेषु हस्य-
न् हरिर्जयति अत्र यद्यपि शैलस्योपरि पतनरूपानिष्टावाप्तिरपि प्रसक्ता तथापि भगवत्करांबुजसंसर्गमहिम्ना सा न जाने-
शैलधारणाकृतेष्टानवाप्तिमात्रं

अत्रेति नवभरभुग्नेत्यनेन बाहुगतास्थिसंधिभंगरूपानिष्टप्राप्तेः साक्षादुपात्तत्वात्सर्वांगचूर्णी-
करणहाररूपा पाश्चात्त्यस्फुटं गम्यमानत्वात्कथमिष्टाप्राप्तिमात्रमित्युच्यत इति वाच्यं अस्थिसंधिभंगस्याशब्दार्थत्वात् भगवद्भुजशैथिल्यप्रयुक्तभा-
रस्येनव कृतापातस्य गोपानां तस्य च क्लेशविशेषानाधायकत्वेनानिष्टव्यपदेशानर्हत्वात् सुहृद्भूतानां गोपानामनिष्टप्राप्तेर्हास्यानुपपन्नेश्च

सर्वांगचूर्णीभावोपिगम्यः गर्वप्रसक्त्यभावाच्च ननदपहारोपि यतश्चिरकालशैलधारणजन्यश्रमपरिजिहीर्षया गोपानां प्रहृत्निरिहावगम्यतइति निरवद्यं लोकइति हेतन्विलोकेप्रसिद्धं कलंकमपहंतुं निवारयितुं मृगांकस्तवमुखंजातः तत्रापिपुनस्तिलकव्याजेन कलंकरेखांलंकल्पयसि करोषि हियस्मान्नार्यःसमाश्रितजनंस्वाश्रितजनंकलंकिनंकुर्वंनीत्यन्वयः शापोपीति मृगयायांप्रमादतोहतपुत्रेणतापसेनत्वमपिपुत्रशो



यथावा लोकेकलंकमपहातुमयंमृगांकोजातोमुखंतवपुनस्तिलकछलेन तत्रापिकल्पयसितन्विकलंकरेखांनार्यः समाश्रितजनंहिकलंकयंति अत्रानिष्टपरिहाररूपेष्टानवाप्तिः यथावा शापोप्यदृष्टतनयाननपद्मशोभेसानुग्रहो भगवतामयिपातितोयं कृष्यांदहन्नपिखलुक्षितिमिंधनेद्धोबीजप्ररोहजननींदहनःकरोति अत्रपरानिष्टप्रापणरूपेष्टा विश्लेषसिध्यर्थंनियुक्तेनान्येननियोक्तुरिष्टमुपेक्ष्यस्वस्यैवेष्टंसाध्यतेतत्रापीष्टानवाप्तिरूपमेवविषमं

तिदशरथस्येयमुक्तिः अदृष्टपुत्रमुखपंकजशोभमयिभगवनात्वयापातितः अयंशापोपिसानुग्रहोभवति खलुनिश्चितंइंधनैरिद्धोदीप्तोदहनः कान्मरिष्यसीतिशापेदत्तेतंप्र कृषियोग्यांक्षितिंदहन्नपिबीजांकुरजननींकरोतीतिदृष्टांतः परेति परस्यदशरथस्यानिष्टप्रापणरूपंयदिष्टंनस्यानवाप्तिरर्थात्तापसस्येत्यर्थः



कुतस्तत्राहस्वतइति नियोक्तुःप्रेषयितुः

यं प्रतीति ॰ मौढ्यं मूढत्वं एवंविधायामामत्वबुद्धिः विधेर्दैवस्य विपाकं परिपाकं फलमितियावत् भानुरिति हे हरे भानुः सूर्यः भवच्चरणकिरण
शोभायालोभात्स्वीयकिरणसमूहं निशासु प्रभातपर्यंतं प्रनाप्य रात्रौ सूर्यकिरणानामग्नौ प्रवेशानापयित्वा तत्र तस्मिन्किरणोत्करे ऊतवहा

यथा संप्रति प्रेषिता दूती तस्मिन्नेव लयं गता सख्यः पश्य तमो ढ्यं मे विपाकं वा विधेरमुं तस्मि
न्नेव लयं गतेति नायके दूत्याः स्वाछंद्यं दर्शितं यथा वा नपुंसकमिति ज्ञात्वा प्रियाये प्रेषितं मनः
तत्तु तत्रैव रमते हताः पाणिनिना वयं एतानि सर्वथैवैतान वा मेरुदाहरणानि कदाचिदिष्यावामि
पूर्वकं तदनवाभिर्यथा मदीयवरदराजस्त्वं भानुर्निशासु भवदंघ्रिमयूखशोभालोभात्प्रताप्य कि
रणोत्करमा प्रभातं तत्रोद्भूते ऊतवहात्क्षणलुप्तरागे तापं भजत्यनुदिनं स हिमं दतापः ॥

दग्नेः सकाशादुद्भूते सति रक्ततादर्शनात् मंदसंतापः सन् क्षणमात्रेण लुप्तरागे नष्टलौहित्ये सत्यनुदिनं तापं भजतीत्यन्वयः ॥

लङ्केति हेहरे अयंविधुः पर्वणिपूर्णिमायां अंबुजस्यकोशः कुड्मलः सएवांबुजरूपभांडारगृहं तस्यमुद्रामुकुली भावो मुद्रणंच तस्य भंगेना नागृहीताल सुषमा नतु शोभायैस्ताद्दशायेमित्रकराः सूर्यकिरणाः सुहृत्पाणयश्च तेषामुपक्रुत्या लाभेनलङ्कस्य कांतिंलब्धापिक्रमंहीयमानः क्षीयमाणःसन् अनीत्याउपार्जितां प्रहृद्धांश्रियं आशुनाशोयस्यास्तांशंसनि कथयतीत्यन्वयः अत्रेति आगमसिद्धंतस्या [illegible]

यथावा लङ्कसाम्यमयमंबुजकोशमुद्राभंगान्नतत्सुषुममित्रकरापकृत्या लब्धापिपर्वणिविधुः क्रमहीयमानः शंसत्यनीत्युपचितांश्रियमाशुनाशां अत्राद्यश्लोकेसूर्यकिरणानांरात्रिष्वग्निप्रवेशनमागमसिद्धं सूर्यस्यनिजकिरणेषुभगवच्चरणारुणिमप्रेप्सयातत्कृतंतेषामग्नौप्रतापनं परिकल्प्यतेषामुदयकालद्दश्यमरुणिमानंचतसोद्धृतनाराचानामिवाग्निसंतापनप्रयुक्तारुणिमानुवृत्तिपरिकल्प्यसूर्यस्यमहतापिप्रयत्नेनतात्कालिकेष्टावाप्तिरेवजायतेनसार्वकालिकेष्टाप्तिरितिदर्शितं

प्रविशतिरात्रावादित्यस्तमितिश्रुतिसिद्धं प्रवेशनं तत्कृतं सूर्यकृतं तेषांकिरणानामग्नौ प्रतापनरूपंपरिकल्प्य उत्प्रेक्ष्य एवंतेषांकिरणानामरुणिमानं आरक्तत्वंच अरुणिमानुवृत्तिरूपंपरिकल्प्य इतिदर्शितमित्यन्वयः

एवमग्रेपि सुहृत्वेन सूर्यं परिकल्प्य तत्किरणस्य चंद्रानुप्रवेशं च शास्त्रसिद्धं सुहृत्साणेर्यथोक्तविशेषणविशिष्टस्य चंद्रस्पर्शरूपं च परिकल्प्य इति दर्शितमित्यन्वयः बल्लालेति हे एतन्नामक भूपाल त्वच्छत्रुनगरे संचरंती भिल्लीप्रकीर्णानि रलान्यादाय उरुतरा महती या खदिरांगा

द्वितीयश्लोके चंद्रस्य भगवन्मुखलक्ष्मीं लिप्समानस्य सुहृत्त्वेन मित्रशब्दश्लेषवशात्सूर्यं परिकल्प्य
तत्किरणस्य कमलमुकुलविकासनं चंद्रानुप्रवेशनं च सुहृत्साणेर्भगवन्मुखलक्ष्मीनिधानकोशगृ
हमुद्रामोचनपूर्वकं तत्तो गृहीतभगवन्मुखलक्ष्मीकस्य तया भगवन्मुखलक्ष्म्या चंद्रप्रसाधनार्थं चं
द्रस्पर्शरूपं च परिकल्प्यैतावता पि प्रयत्नेन पौर्णमास्यामेव भगवन्मुखसाम्यरूपेष्टप्राप्तिर्जायते न सा
र्वकालिकेति दर्शितं कश्चिदिशान वामावपि तदवाप्तिश्रमनिबंधनविच्छित्तिविशेषः यथावा बल्लाल
क्षोणिपाल त्वदहितनगरे संचरंती किराती रलान्यादाय कीर्णान्युरुतरखदिरांगारशंकाकुलांगी क्षिप्त्वा
श्रीखंडखंडं तदुपरि मुकुलीभूतनेत्रा धमंती श्वासामोदप्रसक्तैर्मधुकरपटलैर्धूमशंकां करोति रस्य शंकाभ्रांतिस्तया व्याकु

लांगी तदुपरि श्रीखंडकाष्ठशकलं क्षिप्त्वा मुकुलीभूतनेत्रा फूत्कारं कुर्वती सती श्वासपरिमलेन प्रसक्तै रागतैर्भ्रमरसमूहैर्धूमशंकां करोतीत्यन्वयः

नभ्रूनेनि बकुलस्यर्थः एतेषु च सर्वभूताद्योत्पादकभावरूपसंबंधगर्भेषु प्रभेदेषु कार्यकारणयोः कचिद्विलक्षणगुणशालित्वेनानुरूप्याभावा न्न कच्चिद्वेषोत्पादकत्वेनाभिमतस्य कारणस्येष्टानवाप्त्यनिष्टावाप्तिरूपकार्येणानुरूप्याभावात्सामान्यलक्षणासमन्वयो बोध्यः इत्यलं लंकारनंदिकायां विषमालंकारः समभिति अनुरूपयोः श्लाघनंतरं संबंधस्येति शेषः परस्परमनुरूपयोः संबंधस्य वर्णनं समं नामा

अत्र प्रभूनाग्निसंपादनाद्योगात्तत्संपादनात्लाभेऽपि तल्लाभः श्लेषोपन्यासमुखेन निबद्धः समं स्याद्वर्णनं यत्र द्वयोरप्यनुरूपयोः स्वानुरूपं कृतं सद्म हारेण कुचमंडलं प्रथमविषमप्रतिद्वंद्वीदं समं यथा वा कौमुदीव तुहिनांशुमंडलं जाह्नवीव शशिखंडमंडनं पश्य कीर्तिरनुरूपमाश्रिता त्वां विभाति नरसिंहभूपते चित्रं चित्रं बत बत महच्चित्रमेतद्विचित्रं जातो दैवादुचितघटनासंविधाता विधाता यन्निंबानां परिणतफलस्फीतिरास्वादनीया यच्चैतस्याः कवलनकलाकोविदः काकलोकः पूर्वस्तुतिपर्यवसायी द्वितीयो निंदापर्यवसायीति भेदः ७

लंकारः ॰सद्म स्थानं शशिखंडमंडनं चंद्रकलाभूषणं हरं चित्रमिति, अत्र चित्रबतशब्दयोर्वीप्सा विस्मयातिशयद्योतनाय परिणतं पक्वं स्फीतिः समृद्धिः एतस्याः फलसमृद्धेः कवलनकला भक्षणचातुर्यं तत्र कोविदः पंडितः

सारूप्यमपीति कार्यस्यकारणेनसारूप्यमपिसमालंकारः नीचेति नीचप्रवणतानीचासक्तता जलजायाःसमुद्ररूपजलाज्जातायाः
उचितेति जलस्यताद्दशत्वादितिभावः दवेति घनतांमेघरूपतांवर्षैर्जलवर्षणैःशमयति नाशयति हियस्मात्सोपिदवदहनोपिदवमे
व स्वोत्पादकंविनिर्दहति तथाचकारणस्यस्वोत्पादकनाशकत्वात्कार्यस्यापिधूमस्यतथात्वमुचितमित्यर्थः आद्यावति विरुद्धिन्याद्वयमुक्तिः

सारूप्यमपिकार्यस्यकारणेनसमंविदुः नीचप्रवणतालक्ष्मीर्जलजायास्तवोचिता इदंद्वितीयविषमप्रतिद्वंद्विसमं
यथावा दवदहनादुत्पन्नोधूमोधूननामवाप्यवर्षैर्यं यच्छमयतितद्युक्तंसोपिचदवमेवनिर्दहति यथावा आसो
हालाहलकृतभुजादन्नहस्तावलंबोबाल्येअनिर्मिटिलमहसाबद्धमैत्रीनिरूढः प्रौढोराहोरपिमुखविषेणांतरंगी
कृतोयः सोयंचंद्रस्तपतिकिरणैर्मामितिप्राभमेतत् पूर्वत्रकारणस्वभावानुरूप्यंकार्यस्यात्रागंतुकनदीयदुष्टसंस
र्गानुरूप्यमितिभेदः

सोयंचंद्रः मांकिरणैस्तपतीत्येतत्प्राप्तंन्यायप्राप्तमित्यर्थः सकः यआदौहालाहलरूपेणकृतभुजाग्निनादत्तोह
स्तावलंबोयस्यसः निटिलंललाटंनत्संबंधिमहसानेत्राग्निना बद्धयासंबद्धयामैत्र्यानिरूढः प्रसिद्धः प्रौढोयुवाराहोर्मुखसंबंधिभिर्विषैरंत

रंगीकृतः ग्रहणकाले संपर्कातिशयादंतरंगतां प्रापित इत्यर्थः अत्र कार्यस्य तापस्य कारणीभूतवंद्रगतदुष्टसंसर्गानुरूपत्वं भेदांतरमाह विनेति
अनिष्टं विनाप्यमर्थं कर्तुमुद्यतस्तत्सिद्धिरपि सममित्यनुवृत्त्यायोज्यं यदर्थमिति पाठे यश्चासावर्थश्चेत्यर्थः युक्त इति वारणं निवारणं वार

विनानिष्टं च तत्सिद्धिर्यदर्थं कर्तुमुद्यमः युक्तो वारणलाभोयं स्यान्न ते वारणार्थिनः इदं सम
मनिष्टस्याप्यवाप्तिश्चेत्यर्थसंगृहीतस्य त्रिविधस्यापि विषमस्य प्रतिद्वंद्वि इष्टावाप्तिरनिष्टस्या
प्रसंगाच्च अत्र गजार्थितया राजानमुपसर्पतं तं दौवारिकैर्वार्यमाणं प्रति नर्मवचनमुदाहरणं न चा
त्र निवारणमनिष्टमापन्नमित्यनुदाहरणत्वं शंकनीयं राजद्वारि क्षणनिवारणं संभावितमिति त
दंगीकृत्य प्रवृत्तस्य विषमालंकारोदाहरणेष्विवातर्कितोत्कटानिष्टाप्त्यभावात् किंच यत्रातर्कितो
त्कटानिष्टसत्त्वे श्लेषमहिम्नाद्दृष्टार्थत्वप्रतिपत्तिः तत्रापि समालंकारोऽप्रतिहत एव णोगजश्च युक्तो न स्यादपि तु स्या
देवेत्यर्थः ग्रोभत इति क्वचित्पाठः साधुरेव अपिसंगृहीतस्य अपिशब्दसंगृहीतस्य नर्मवचनं परिहासवचनं अत्रेष्टावाप्तिः श्लेषकल्पिता बोध्या
इष्टार्थप्रतीतिरिति इष्टार्थत्वेन प्रतीतिरित्यर्थः अप्रतिहत इति अनिष्टस्येष्टाभिन्नत्वेन ज्ञानकालेऽनिष्टत्वेनाप्रतिभासादिति भावः ७

उच्चैरिति गजैरटनं तदारोहणपूर्वकं गमनं इह त्वन्नगरे उषितोस्मि वासं कृतवानस्मि तदेव मत्प्रार्थ्यमानमेव उच्चाटनं दूरनिरसनमेव उच्चैर्गजैरटनं प्रति मां लंभयन्मे प्रापयसि हि यस्मात् महतां सेवा विफला न भवतीति मुखे स्तुतिः ततो दूरनिरसनरूपार्थांतरपरिग्रहेण विषमालंकारस्फूर्त्या निंदायां पर्यवसानं एतेन वैषम्यस्य निंदारूपस्य व्याजस्तुतिविषयत्वेन तयाऽपवाद इति निरस्तं विषमस्य निंदामूलत्वेन तद्रूपत्वाभावादिति इष्टार्थावाप्तिसत्वेपि वास्तविके

उच्चैर्गजैरटनमर्थयमान एव तामाश्रयन्निह चिरादुषितोस्मि राजन् उच्चाटनं त्वमपि लंभयसे न देव मामद्य नैव विफला महतां हि सेवा अत्र यद्यपि व्याजस्तुतौ स्तुत्या निंदाभिव्यक्तिविवक्षायां विषमालंकारः तथापि प्राथमिकस्तुतिरूपवाच्यविवक्षायां सममालंकारो न निर्वाह्यते एवं यत्रेष्टावाप्तिसत्वेपि श्लेषवशादसतो निष्टार्थस्य प्रतीतिस्तत्रापि सममालंकारस्य न क्षतिः यथा शस्त्रं न खलु कर्तव्यमिति पित्रा नियोजितः तदेव शस्त्रं कृतवान् पितुराज्ञा न लंघिता अत्र पितुराज्ञानलंघितेत्यनेन विरोधालंकाराभिव्यक्त्यर्थं न खल्वित्यत्र पदद्वयविभागात्मकरूपांतरस्यापि विवक्षायां सत्यपि नखं लुनातीति नखल्वित्येकपदेन वस्तुसदर्थांतरपररूपांतरमादाय सममालंकारोप्यस्त्येव

ष्टार्थप्राप्तिसत्वेपि न क्षतिरिति अनिष्टप्रतीतेराभासरूपत्वेनापर्यवसानादिति भावः शस्त्रमिति तदेव न खल्वेव एकपदत्वेनेत्युपलक्षणे तृतीया एकपदत्वोपलक्षितं यद्वस्तु सदर्थांतरपरं रूपांतरमित्यर्थः अर्थांतरं च वास्तविकं पदव्युत्पत्तिकथनेन दर्शितमेव

अहोइति माति संमाति मातुमशक्यः अपरिमितः अत्रभुवनत्रयोदरे तन्वाधारयोः शब्दब्रह्मभुवनोदरयोरप्रस्कृततत्वेनाप्रशंसनीयत्वात्तदाधिक्यवर्णनमयुक्तमित्याशंक्याह अत्रेति नचात्राप्रस्कृतप्रशंसाशंकनीया प्रस्कृतस्याप्यभिधानादिति इत्थंचाधाराधेयान्यतरस्यतनोरप्याधिक्यवर्णनमि

यथावा अहोविशालंभूपालभुवनत्रितयोदरं मातिमातुमशक्योपियशोराशिर्यदत्र
ते अत्र यद्यप्युदाहरणद्वयेपिकियद्वाग्ब्रह्मेति अहोविशालमितिचाऽधारयोःप्रशंसा
क्रियते तथापि तनुत्वेनसिद्धवत्कृतयोः शब्दब्रह्मभुवनोदरयोर्गुणयशोराश्यधिकरणत्वे
नाधिकत्वंप्रकल्प्यैव प्रशंसाक्रियत इतितत्प्रशंसाप्रस्तुतगुणयशोराशिप्रशंसायामेवप
र्यवस्यति अल्पंतुसूक्ष्मादाधेयाद्यदाधारस्यसूक्ष्मता मणिमालोर्मिकातेऽद्यकरेजपव
टीयते

तिसामान्यलक्षणंबोध्यं इत्यधिकालंकारः अल्पमिति यदितिसामान्येनपुंसकं स्वापेक्षयासूक्ष्मादाधेयादाधारस्यसूक्ष्मतायत्तदल्पंनामालंकारः

मणीति मणिपंक्तिरूपा उर्मिका अंगुलीयकं तेकरे अद्यविरहावस्थायां जपमालायत इत्यर्थः वटशब्दस्य गुटिकापर्यायत्वात् अतिसूक्ष्मता आ
धेयभूतमालापेक्षयापिसूक्ष्मता यदिति हे चंचलाक्षितव मध्यभागादपियत्सूक्ष्मं दृश्यतेतत् मृणालसूत्रमपितवस्तनयोरंतरे मध्येनमातीत्य

अत्रमणिमालामयोर्मिकातावदंगुलिमात्रपरिमितत्वात्सूक्ष्मा सापिविरहिण्याः ४
करेकंकणवत् प्रवेशितातस्मिन् जपमालावल्लंबत इत्युक्त्यातत्तोपिकरस्य
विरहकार्श्यादतिसौक्ष्म्यंदर्शितं यथावा यन्मध्यदेशादपितेसूक्ष्मंलोलाक्षिदृ
श्यते मृणालसूत्रमपितेनसंमातिस्तनांतरे अन्योन्यनामयत्रस्यादुपकारः
परस्परं त्रियामाशशिनाभातिशशीभातित्रियामया यथावा यथोर्ध्वा
क्षः पिबत्यंबुपथिकोविरलांगुलिः तथाप्रपापालिकापिधारांवितनुतेतनुं

न्वयः इत्यल्पालंकारः अन्योन्यमिति यत्रपरस्परमुपकारः स्यात्तत्रान्योन्यनामालंकारः त्रियामा रात्रिः यथेति उर्ध्वाक्षः उर्ध्वनय
नः प्रपापालिका प्रपारानाधिकृताकाचित् स्त्री धारांजलधारां तनुं सूक्ष्मां

अत्रेति प्रपापालिकायाः पथिकेनोपकारः कृत इत्यन्वयः भासत इत्यादि प्रपापालिकाया विशेषणं संपादनेन करणभूतेन एवं प्रपापालिकयापि पथिकस्योपकारः कृत इत्यन्वयः यत्तु स्वमुखावलोकनाभिलाषवता त्वया प्रशब्दस्य प्रपापालिकाबोधकत्वमेव न्याय्यं न पथिकबोधकत्वं यद्विशेषणघटकत्वेन स्वानिजादिशब्दा उपात्तास्तद्बोधका इति व्युत्पत्तिरिति केचिदुक्तं तदयुक्तं मुख्यविशेष्यविशेषणघटकस्य स्वतनिजादिशब्दस्य मुख्यविशेष्यमात्रगामित्वव्युत्पत्तेः यथा देवदत्तस्य पुत्रः स्वमातृभक्त इत्यादौ स्वशब्दस्य गाढ(?)पुत्रगामित्वं न तु गुणभूतदेवदत्तगामित्वं अत एव हंसाः स्फुलत्(?) एव निजतनुस्वच्छलावण्यवापीसंभूताम्भो

अत्र प्रपापालिकायाः पथिकेन स्वासक्त्या पानीयदानव्याजेन बहुकालं स्वमुखावलोकनमभिलषंत्या विरलांगुलिकरणेन चिरं पानीयदानानुवृत्तिसंपादनेनोपकारः कृतः तथा प्रपापालिकयापि पानीयपानव्याजेन चिरं स्वमुखावलोकनमभिलषतः पथिकस्य धारातनूकरणेन चिरं पानीयपानानुवृत्तिसंपादनेनोपकारः कृतः अत्रोभयोरन्योन्यानुरागाभ्यां स्वस्वोपकारसद्भावेपि परस्परोपकारोपि नाभिप्रेतः

ज इत्यादि(?) धदभिनवोदंडपादो भवान्या इत्यत्राभवन्मरुयोगत्वं दूषणमुदाहृतं मम्मटभट्टैः काव्यप्रकाशिकायां अन्यत्र तु न स्वविशेष्यगामित्वनियमः स्याश्रितानां विप्राणामयं पालकः स्वाज्ञाकारिणां भृत्यानामयं कल्पवृक्ष इत्यादौ व्यभिचारात् न चैवं स्वदाररतानां विप्राणामहं भक्त इत्यत्र मदीयदाररतानामिति प्रतीतिः स्यादिति वाच्यं तात्पर्यस्य नियामकत्वेनापत्त्यभावादिति इत्यन्योन्यालंकार

विशेषइति ख्यातंप्रसिद्धं तदुक्तं विनाप्रसिद्धमाधारमाधेयस्यव्यवस्थितिरिति छिंदंति नाशयंति तत्कराः सूर्यकिरणाः रात्रावादित्यस्या ग्नौ प्रवेशश्रवणाद्दीपस्थत्वं कमलमिति अत्रकमलत्वादिनामुखादेरध्यवसानंबोध्यं कुवलयेनेत्रेएतानिकमलकुवलयानि कनकलतारूपायां

विशेषः ख्यातमाधारं विनाप्याधेयवर्णनं गतेपि सूर्ये दीपस्थास्तमश्छिंदंतितत्कराः यथावा कमलमनंभसि कमले कुवलयमेतानि कनकलतिकायां साचसुकुमारसुभगेत्युत्पातपरंपरा केयं अत्राद्ये सूर्यस्य प्रसिद्धा धारस्याभावेपितत्कराणामन्यत्रावस्थितिरुक्ता द्वितीये तुंभसः प्रसिद्धाधारस्याभावेपि कमलकुवलययोरन्य त्रावस्थितिरुक्ता क्वचित्प्रसिद्धाधाररहितानामाधारांतरनिर्देशं विनैवा प्रलयमवस्थितिर्वर्णनं दृश्यते यथा दिवमप्युपयातानामाकल्पमनल्पगुणगणायेषां रमयंतिजगंतिगिरः कथमिवकवयोननेवंद्याः अत्रक वीनामभावेपि तद्गिरामाधारांतरनिर्देशं विनैवाप्रलयमवस्थितिर्वर्णिता विशेषः सोपियदेकंवस्त्वनेकत्रव र्ण्यते अंतर्बहिः पुरः पश्चात्सर्वदिक्ष्वपि सैवमे

कामिन्यां साचकनकलतिकाच निर्देशः कथनं आप्रलयं प्रलयपर्यंतं दिवमिति दिवमुपयातानामपि येषामनल्पगुणगणयुक्तागिरः आकल्पंकल्पपर्यंतंजगंतिभुवनानिरमयंतीत्यन्वयः प्रभेदांतरमाह यदीति तृतीयंप्रका रमाह

किंचिदिति किंचित्पदार्थारंभेणाशक्यस्यवस्त्वंतरस्यकृतिः करणंचशब्दविशेषः त्वामितिप्रभुंप्रतियाचकोक्तिः स्फुरदिति उत्कटःप्रताप रूपोज्वलनोग्निर्यस्येत्यर्थः उक्तविशेषणंत्वांसृजता विधिना भुविनवोमनोभवादिः सस्रृजेसृष्टइति सत्यमित्यन्वयः अत्रचोक्तभेदत्रया

यथावा हृदयान्नापयातोसि दिक्षुसर्वासुदृश्यसे वत्सरामगतोसीतिसंतापेनानुमीयसे किंचिदारंभतो शक्यवस्त्वंतरकृतिश्चसः त्वांपश्यतामपालभ्यंकल्पवृक्षनिरीक्षणं यथावा स्फुरदद्भुतरूपमुत्प्रतापज्व लनंत्वांसृजतानवद्यविद्या विधिनाससृजेनवोमनोभूर्भुविसत्यंसविताबृहस्पतिश्च अत्राद्येराजदर्शना रंभेणकल्पवृक्षदर्शनरूपाशक्यवस्त्वंतरकृतिः द्वितीयोराजसृष्ट्यारंभेणमनोभवादिसृष्टिरूपाशक्यव स्त्वंतरकृतिः स्याद्व्याघातोन्यथाकारितथाकारिक्रियेतचेत् येर्जगत्प्रीयतेहंतितैरेवकुसुमायुधः यद्यत्सा धनत्वेनलोकेऽवगतंतत्केनचितद्विरुद्धसाधनंक्रियेतचेत्सव्याघातः

न्यतमत्वंसामान्यलक्षणंबोध्यं इतिविशेषालंकारः स्यादिति तथाकारितत्कार्यसाधनवस्तु अन्यथाकारितत्कार्यविरुद्धकार्यसाधनंचेत्क्रि येततदाव्याघातोलंकारःस्यादित्यर्थः यैरिति यैःकटाक्षविभ्रमादिभिर्जगत्प्रीयते संतुष्यति तैरेवकुसुमायुधोहंतीत्यन्वयः ११०

विरूपाक्षस्य हरस्य जयिनीः विजयकारिणीः स्तुवे स्तौमि भेदांतरमाह सौकर्येणेति कारणस्यानुगुण्याधिक्येनेत्यर्थः निबद्धा कविवर्णिता कार्यविरोधिनी परामिमतकार्यविरुद्धा दर्श्यते दिग्विजयाय प्रस्थितं राजानं प्रतियुवराजस्योक्तिः बालइत्यतो मयि दयायौवराज्यस्थापन

यद्वायत्साधनं तया केनचिदुपात्तं तदन्येन तत्प्रतिद्वंद्विना तद्विरुद्ध साधनं क्रियेत चेत्सोपि व्याघातः त
त्रायमुदाहृतः द्वितीयोयथा दृशादग्धं मनसिजं जीवयंति दृशैव याः विरूपाक्षस्य जयिनीस्ता स्तुवे
वामलोचनाः सौकर्येण निबद्धापि क्रिया कार्यविरोधिनी दयाचेद्बाल इति मय्यपरित्याज्य एव ते कार्य
विशेषानिष्पादकतया केनचित्संभाव्यमानादर्थादन्येन कार्यविरोधिक्रिया सौकर्येण समर्थ्यते चेत्सो
पि व्याघातः कार्यविरुद्धक्रियायां सौकर्यं कारणस्य स्फुततरं तदानुगुण्यं यथा जैत्रयात्रोन्मुखेन राज्ञा
युवराजस्य राज्य एव स्थापने यत्कारणत्वेन संभावितं बाल्यं तत्प्रत्युत तद्विरुद्धस्य सहनयनस्यैव कारण
तया युवराजेन परित्यागस्यायुक्तत्वं दर्शयता समर्थ्यते

रूपाचेत्तदा तस्मादेव हेतो रहं त्वया परित्याज्य एव

किंतु त्वेन सह नेतव्य इत्यर्थः अर्थादिति हेतौ पंचमी अन्वयश्चास्य समर्थ्यत इत्यनेन अन्येन नत्कार्ये तेनेति जयसाधनेत्यर्थः

लुब्धइति तथैवशंकया दारिद्र्यशंकयैव ननुनिश्चितं अत्रपूर्वार्धेलुब्धस्यदानाभावसाधकत्वाभिमतदारिद्र्यशंकारूपपूर्वपक्षनिरूपणं दातुस्तस्यैवविरुद्धदानसाधकत्वेन संमतेतिपूर्वं विरुद्धपक्षनिरूपणमुत्तरार्द्धे यद्यपिदारिद्र्यस्यतात्कालिकत्वेन जन्मांतरीणत्वेनचशंका भिन्नानथाप्यभेदाध्यवसायान्नलक्षणासमन्वयइतिबोध्यं सामान्यलक्षणंपूर्ववदन्यमतघटितमनुसंधेयमितिदिक् इतिव्याघाताले

यथावा लुब्धोनविसृजत्यर्थंनरोदारिद्र्यशंकया दातापिविसृजत्यर्थंतथैवननुशंकया अत्रपूर्वोत्तरार्द्धे पक्षप्रतिपक्षरूपैकयोश्चिद्वचनेइतिलक्षणानुगतिः गुंफःकारणमालास्याद्यथाप्राक्प्रांतकारणैः नयेनश्रीःश्रियात्यागस्त्यागेनविपुलंयशः उत्तरोत्तरकारणभूतपूर्वपूर्वैःपूर्वपूर्वकारणभूतोत्तरोत्तरैर्वावस्तुभिःकृतोगुंफःकारणमाला आद्योदाहृता द्वितीयोयथा भवंतिनरकाःपापात्पापंदारिद्र्यसंभवं दारिद्र्यमप्रदानेनतस्माद्दानपरोभवेत्

कारः गुंफइति रचनेत्यर्थःकैस्तत्राह यथेति प्राक्चप्रांतंचप्राक्प्रांते ते अनतिक्रम्येति यथाप्राक्प्रांतंयानिकारणानि तैःपूर्वपूर्वैःप्रतिकारणैरुत्तरोत्तरैःप्रतिकारणैश्चेत्यर्थः एवंचोत्तरोत्तरैरित्यादि व्युत्क्रमेणाभिधानमुदाहरणक्रमानुरोधेनेतिहार्दं इतिकारणमाला ७

गृहीतेति. वक्ष्यमाणया गृहीतमुक्तरीत्या निबद्धार्थपंक्तिरेकावलिरलंकारः नेत्रइति तस्य भूभुज इति सर्वत्र संबध्यते दोस्तंभयोर्भुजस्तंभयोः दोलितमांदोलनं ययोस्तौ दोलनाविति पाठे दोलादोलनं ययोरस्ती ति विग्रहः रत्नमुकुरो रत्नदर्पणः दिक्कालेति दिक्कालात्मभिस्तुल्या यस्याकाश स्य विभुता यश्च तत्राकाशे निशेषणद्योतते सूर्यः यत्र च चंद्रे अमुष्य सूर्यस्य किरणा अमृतरूपा भवंति स च चंद्रो यासामपां राशेः समुद्राद भूत

गृहीतमुक्तरीत्यार्थश्रेणिरेकावलिर्मता नेत्रे कर्णांतविश्रांते कर्णौ दोस्तंभदोलितौ दोस्तंभौ जानुपर्यंतप्रलंबनमनोहरौ जानु नीरत्नमुकुराकारे तस्य हि भूभुजः उत्तरोत्तरस्य पूर्वपूर्वं विशेषणभावः पूर्वपूर्वस्य उत्तरोत्तरविशेषणभावो वा गृहीतमु क्तरीतिः तत्राद्यप्रकार उदाहृतः द्वितीयो यथा दिक्कालात्मसमैव यस्य विभुता यस्तत्र विद्योतते यत्रामुष्य स्फुधी भवंति किर णाराशेः स यासामभूत् यस्तत्पित्तमुषः स्फयोस्य हविषं यस्तस्य जीवातवे वोढा यद्गुणमेष मन्मथरिपोस्ताः पांतु नो मूर्तयः

यश्चाग्निस्तासामपां पित्तं भवति शुचिरप्पित्तमिति कोशात् यश्च यजमान उपस्फ प्रातःकाले पुअस्य वन्हेर्हविषः हविर्दानाय भवति यश्च वायुः प्रा णरूपस्तस्य यजमानस्य जीवातवे जीवनौषधाय भवति यस्याश्च पृथिव्या गुणं गंधं एष वायुर्वोढा ता एता मन्मथरिपोर्हरस्याष्टौ मूर्तयो वो युष्मा न्पांत्वित्यन्वयः इत्येकावली ७

मालादीपकमिति मालादीपकंनामालंकारः एकमिति वाक्यद्वयान्वयीत्यनेनान्वितं अतद्वति एतावन्मात्रेणदीपसादृश्याद्दीपकंनतु प्रागुक्तदी
पकालंकारः प्रकृताप्रकृतानांसादृश्यस्याभावात्किंतदीकारादिनिभावः संग्रामेति कोदंडेनधनुषाशराः समासादिताः शरैः शत्रुमस्तकंसमासा

दीपकैकावलीयोगान्मालादीपकमिष्यते स्मरेणहृदयेतस्यास्तेनत्वयिकृतास्थितिः अत्रास्थितिरितिपदमेकंस्मरेणत
स्याहृदयेस्थितिःकृता हृदये त्वयिस्थितिःकृतेत्येवंवाक्यद्वयान्वयिअतोदीपकं गृहीतमुक्तरीतिसद्भावादेकाव
लीचेतिदीपकैकावलीयोगः यथावा संग्रामांगणमागतेनभवताचापेसमारोपितेदेवाकर्णययेनयेनसहसाय
द्यत्समासादितं कोदंडेनशराःशरैरशिरस्तेनापिभूमंडलं तेनत्वंभवताचकीर्तिरतुलाकीर्त्याचलोकत्रयं अत्रये
नयेनसहसायद्यत्समासादितमितिसर्वोपवाक्यस्थितमेकंसमासादितपदंकोदंडेनशराइत्यादिषुषट्स्वपिविवर
णवाक्येषुतत्तदुचितलिंगवचनविपरिणामेनान्वेतीतिदीपकंशरादीनामुत्तरोत्तरविशेषणभावादेकावलीचेतिदी
पकैकावलीयोगः

दितंतेनशत्रुमस्तकेनापिभूमंडलंतेनभूमंडलेनत्वंपालकः समासादितः भवताकीर्तिरासादिता कीर्त्याचलोकत्र 
यंसमासादितमित्यनुषंगेणान्वयः इतिमालादीपकं ७,

सारइति सारोनामालंकारः तस्याः रुधातः अंतरिति विष्णोरंतःउदरे त्रयाणांलोकानांसमाहारस्त्रिलोकी सोपिविष्णुरपिफणिनोनागानामीश्वरे शेषेशेतेनिद्राति सोपिशेषोपिसिंधौरत्नाकरेशेतिष्ठतीतिशेषः तमपिसिंधुमपिकुंभयोनिः अगस्त्यःचुलुकयांचकार पीतवान् अ

उत्तरोत्तरमुत्कर्षःसारइत्यभिधीयते मधुरंमधुतस्माच्चरुधातस्याःकवेर्वचः यथावा अंतर्विष्णोस्त्रिलोकीनिवसतिफणिनामीश्वरेसोपिशेतेसिंधौःसोप्येकदेशेतमपिचुलुकयांकुंभयोनिश्चकार धत्तेखद्योतलीलामयमपिनभसिश्रीनृसिंहक्षितींद्रत्वत्कीर्तेःकर्णनीलोत्पलमिदमपिचप्रेक्षणीयेविभाति अयंश्लाघ्यगुणोत्कर्षः अश्लाघ्यगुणोत्कर्षोयथा तृणाल्लघुतरस्तूलस्तूलादपिचयाचकः वायुनाकिंननीतोसौमामयंप्रार्थयेदिति उभयरूपोयथा गिरिर्महान्गिरेरब्धिर्महानब्धेर्नभोमहत् नभसोपिमहद्ब्रह्मततोप्याशागरीयसी अत्रब्रह्मपर्यंतेपुमहत्वंश्लाघ्यगुणः प्रकृतार्थत्वाशायामश्लाघ्यगुणः

यमगस्त्योपिनभसिगगनेखद्योतशोभांधत्ते इदंगगनमपिप्रेक्षणीयंसुंदरंत्वत्कीर्तेःकर्णभूषणंनीलोत्पलंविभातीत्यन्वयः तूलःकार्पासः प्रकृतार्थाशायां प्रकृतार्थरूपायामाशायां इतिसारालंकारः ७

यथासंख्यमिति क्रमिकाणां क्रमेणोक्तानां पदार्थानां तेनैव क्रमेणान्वयो यथा[illegible]मालंकारः शरणमिति कृपणेन धनानि यन्नत्यज्यंते तत्किंतानि शरणं प्रपन्नानि यच्च न भुज्यंते तत्किं विषवन्मारयंतीति क्रमेणान्वयः कश्चिद्ग्रामनादयः इतियथासंख्यालंकारः पद्म 

यथासंख्यंक्रमेणैवक्रमिकाणांसमन्वयः शत्रुंमित्रंविपत्तिंच जयरंजयभंजय यथावा शरणंकिंप्रपन्नानिविषवन्मारयंतिवा नत्यज्यंतेनभुज्यंतेकृपणेनधनानियत् अमुंक्रमालंकारइतिकेचिद्व्याजह्रुः पर्यायोयदिपर्यायेणैकस्यानेकसंश्रयः पद्मंमुक्त्वागताचंद्रंकामिनीवदनोपमा अत्रैकस्यकामिनीवदनसादृश्यस्यक्रमेणपद्मचंद्ररूपानेकाधारसंश्रयणंपर्यायः यद्यपिपद्मसंश्रयणंकंठतोनोक्तं तथापिपद्मंमुक्त्वेति तत्परित्यागोक्त्याप्राकृतत्संश्रयाक्षेपेणपर्यायनिर्वाहः

यइति पर्यायेण क्रमेण अनेकसंश्रयः अनेकाश्रितत्वं तदुक्तं एवंक्रमेणानेकस्मिन् पर्यायइति पद्ममिति रात्रौपद्मसंकोचात्त्यागः 

अत एवन्यागेन पूर्वसंश्रयणात्स पादेव श्रोणीति जघनबंधस्तनुतां कृशतां त्यजति मध्यभागस्तां सेवते आश्रयति वक्षःस्थलं कुचसचिव
तां कुचसहितत्वं धत्ते पक्षे त्वद्वितीयं अत्र पूर्ववक्षसोः द्वितीयत्वावगमात्पर्यायसंभवो ज्ञेयः अद्वितीयत्वं द्वितीयरहितत्वमनुपमत्वं चेक
त्वेनाध्यवसितं एवं चोदाहरणद्वये पिपूर्वाधारसमाश्रयणं गम्यं उत्तराधारसमाश्रयणं शाब्दमिति सर्वत्र सर्वाधारसमाश्रयणांशे नन्विति

अत एव श्रोणीबंधस्त्यजति तनुतां सेवते मध्यभागः पद्भ्यां मुक्तास्तरलगतयः संश्रिता लोचनाभ्यां
धत्ते वक्षः कुचसचिवतामद्वितीयं तु वक्त्रं त्वद्गात्राणां गुणविनिमयः कल्पितो यौवनेनेत्यत्र पर्या
यं काव्यप्रकाशकृदुदाजहार सर्वत्र शाब्दः पर्यायो यथा नन्वाश्रयस्थितिरियं तव कालकूट केनो
त्तरोत्तरविशिष्टपदोपदिष्टा प्रागर्णवस्य हृदये वृषलक्ष्मणोऽथ कंठेऽधुना वससि वाचि पुनः खला
नां सर्वोप्ययं शुद्धपर्यायः

हे कालकूट उत्तरोत्तरविशिष्टमुत्कृष्टं पदं स्थानं यस्यां तादृशीयमाश्रयस्थितिस्त्वं केनोपदिष्टेत्यन्वयः हृदये अभ्यंतरे अवस इति शेषः
अथानंतरं वृषलक्ष्मणो हरस्य कंठे अधुना पुनरिति संबंधः शब्दः संकोचविकासाभि[illegible]

प्रायइति शैत्यंप्रायोःआर्षावसुधांहेमंते चरित्वागतावसंतनरूणांछायासुविश्रम्य संप्रति ग्रीष्मेतिग्मभानौ सूर्येप्रौढिंप्रागल्भ्यंप्राप्तेस तिशनैरपांजलानामंतरभ्यंतरं अयासीत् गच्छतिस्मेत्यर्थः बिंबोष्ठएवेति बिंबफलसदृशेओष्ठे रागोरक्तिमा अनुरागश्चएषः रागः अत्र रागस्यभेदेप्यभेदाध्यवसायादेकत्वं यत्तु एकसंबंधनाशोत्तरमपरसंबंधेमत्येवलौकपर्यायपदप्रयोगात्श्रोणीबंधइतिप्रकाशादाहृतंतत

संकोचपर्यायोयथा प्रायश्चरित्वावसुधामशेषांछायास्वविश्रम्यतरूणां प्रौढिंगतेसंप्रति तिग्मभा नौशैत्यंशनैरंतरपामयासीत् अत्रशैत्यस्यानेकाधारसंकोचात्संकोचपर्यायः विकासपर्यायोय था बिंबोष्ठएवरागस्तेतन्विपूर्वमदृश्यत अधुनाहृदयेप्येषमृगशावाक्षिदृश्यते अत्ररागस्यपूर्वाधारपरि त्यागेनाधारांतरसंक्रमणामितिविकासपर्यायः एकस्मिन्यद्यनेकंवापर्यायःसोपिसंमतः अधुनापुलिनं तत्रयत्रस्रोतःपुराजनि

थैवदृष्टत्वाच्चबिंबोष्ठएवेत्यत्रपर्यायकथनमयुक्तमितिकेनचिदुक्तं तत्प्रकाशएवबिंबोष्ठइत्युदाह रणेपर्यायसमर्थनात्भ्रांतप्रलपनमिवोपेक्षणीयं आलंकारिकपरिभाषितानांशब्दानांलोकव्यवहारविसंवादस्याकिंचित्करत्वाच्चेति दिक् भेदांतरमाह एकस्मिन्निति पर्यायेणेत्यनुवर्त्तते एकस्मिन्नाधारेक्रमेणयद्यनेकंभवति सोपिपर्यायालंकारः संमत इत्यर्थः

पुरेति अस्माकमित्यस्मदो द्वयोश्चेति द्वयोरपि बहुवचनं पुरेत्यनेन स्थूलातीतकाल उच्यते तत्रापि प्रथमं तनुरविभिन्नाऽभूत् ततोऽनु वित र्कैस्त्वं प्रियतमः वयं प्रियतमाः इदानीं तु त्वं नाथः पतिः वयं भार्याः इतोऽपरं किमनिष्टमिति शेषः कुलिशं वज्रं अत्र त्वं प्रेयानित्येकवचनेन एक रूपप्रेमपात्रत्वं व्यज्यते प्रियतमा इत्यादि बहुवचनेनानेकरूपतद्व्यतिरेक इति बोध्यं इति पर्यायः परिवृत्तिरिति न्यूनाधिकयोर्मिथः परस्परं विनि

यथावा पुराभूदस्माकं प्रथममविभिन्नातनुरियं ततोनुत्वं प्रेया वयमपि हताशाः प्रियतमाः इदा
नीं नाथस्त्वं वयमपि कलत्रं किमपरं हतानां प्राणानां कुलिशकठिनानां फलमिदं अत्र देपत्योः प्र
थममभेदः ततः प्रेयसी प्रियतमभावः ततो भार्यापतिभावः इत्याधेयपर्यायः परिवृत्तिर्विनि
मयो न्यूनाभ्यधिकयोर्मिथः जग्राहैकं शरं मुक्त्वा कटाक्षात्सरिपुश्रियं यथावा तस्य च प्रवय
सो जटायुषः स्वर्गिणः किमिव शोच्यतेधुना येन जर्जरकलेवरव्ययात्क्रीतमिंदुकिरणोज्वलं यशः

मयः परिवृत्तिरलंकारः जग्राहेति कटाक्षपूर्वकं एकं शरं मुक्त्वा रिपोः श्रियं जग्राहेत्यर्थः तस्मात्तात प्रवयसोऽतिवृद्धस्य जटायुषः गृध्रविशेषस्य स्वर्गं गतवतः किमिव शोचनीयं नाकिंचित् जर्जरं जीर्णतरं कलेवरं शरीरं तस्य व्ययो रावणेन सह युद्धं कृत्वा गतस्तस्माद्धेतोः नीतं शरीरं दत्त्वा यशो गृहीत मित्यर्थः इति परिवृत्त्यलंकारः

परिसंख्येति एकंवस्तुप्रतिषिध्यापरस्मिन्वस्तुनोनियंत्रणं नियमनं परिसंख्यालंकारः स्नेहेति स्नेहस्तैलादिस्निग्धद्रव्यं अनुरागश्च स्वांतेषु चित्तेषु विलंघयंतीति यस्यामुज्जयिनीपुर्यां श्रुतिःकर्णः वेदश्च वर्त्ममार्गं वक्रिमाणंकौटिल्यं वक्राकारतांच महाकालइतितत्रैवख्यातंशिवलिंगं

परिसंख्यानिषिध्यैकमेकस्मिन्वस्तुयंत्रणं स्नेहक्षयः प्रदीपेषुनस्वांतेषुनतभ्रुवां यथावा विलंघयंतिश्रुतिवर्त्मयस्यांलीलावतीनां नयनोत्पलानि बिभर्तियस्यामपिवक्रिमाणमेको महाकालजटार्धचंद्रः आद्योदाहरणे निषेधःशाब्दः द्वितीयेत्वार्थः विरोधेतुल्यबलयोर्विकल्पालंकृतिर्मता सद्यः शिरांशिचापान्यानमयंतुमहीभुजः अत्रसंधिविग्रहप्रमाणप्राप्तयोःशिरश्चापनमनयोर्युगपदुपस्थितयोर्युगपत्कर्तुमशक्ययोर्विकल्पः यथावा पतत्यविरतंवारिनृत्यंतिचकलापिनः अद्यकांतःकृतांतोवादुःखस्यांतंकरिष्यति प्रियसमागमश्चेन्नमरणमाशंसनीयंमरणेतुनप्रियसमागमसंभव इतितयोराशंसायांविकल्पः

इतिपरिसंख्यालंकारःसंधिविग्रहप्रमाणेति संधिविग्रहयोःकर्त्तव्यताबोधकप्रमाणेत्यर्थः इतिविकल्पः ७ ७ ७ ७

बहूनामिति युगपत्भावो भवनं तद्भाजां बहूनां गुंफो निबंधः वर्णनमिति यावत् समुच्चयालंकारः बिभ्राणेति नायकं प्रति दूत्याद्युक्तिः हृमाधीलयाहृदये विनिहितं प्रेमाभिधानं नवं शल्यं धारयंती विधुरिता विरहविह्वला सा नायिका यद्दिद्धाति तदाकर्ण्यतामित्यन्वयः किंत

बहूनांयुगपद्भावभाजांगुंफः समुच्चयः नश्यंतिपश्चात्पश्यंतित्रस्यंतिचभवद्द्विषः अविरोधेनसंभावितयौगपद्यानांनाशादीनांगुंफनंसमुच्चयः यथावा बिभ्राणाहृदयेत्वयाविनिहितंप्रेमाभिधानंनवंशल्यंयद्दिदधातिसाविधुरितासाधीलदाकर्ण्यतां शेतेशुष्यतिताम्यतिप्रलपतिप्रम्लायतिप्रेंखतिभ्राम्यत्युल्लुठतिप्रणश्यतिगलत्युन्मूर्छतित्रुट्यति अत्रकासांचित्क्रियाणांकिंचित्कालभेदसंभवेपिशतपत्रपत्रशतभेदन्यायेनयौगपद्यंविरहातिशयद्योतनायविवक्षितमितिलक्षणानुगतिः

दित्यपेक्षायामाह शेतेनिद्राति ताम्यति ग्लानिप्राप्नोति त्रकर्षेण म्लायति प्रेंखति चलति प्रणश्यति नैर्बल्यातिशयेन मृतप्राया भवति गलति खेदातिशयात् त्रुट्यति क्षीणा भवतीति कासांचित् शयनभ्रमणादीनां शतपत्रस्य कमलस्य पत्रशतं दलशतं

अहंप्राथमिकेति अहंपूर्विकेत्यर्थः अहंपूर्वमहंपूर्वमित्यहंपूर्विकास्त्रियामित्यमरः एककार्यान्वये एककार्यसाधकत्वे सः समुच्चयालंकारः अहमहमिकया परस्परमहंकारेण आभिजात्यं कुलीनत्वं समग्रं पुष्कलं प्रदानमिति प्रच्छन्नं गुप्तं गृहं प्रत्युपगते ऽर्थादतिथौ ल

अहंप्राथमिकाभाजामेककार्यान्वयेपिसः कुलंरूपंवयोविद्याधनंचमदयंत्यमुं य
त्रैकः कार्यसिद्धिहेतुत्वेन प्रक्रांत स्तत्रान्येपियद्यहमहमिकया खलेकपोतन्यायेन तत्सि
द्धिं कुर्वंतिसोपि समुच्चयः यथा मदे आभिजात्यमेकं समग्रं कारणं तादृगेव रूपादिकमपि
तत्साधनत्वेनावतरतीति यथा वा प्रदानं प्रच्छन्नं गृहमुपगते संभ्रमविधिर्निरुत्सेको ल
क्ष्म्यामनभिभवगंधाः परकथाः प्रियं कृत्वा मौनं सदसि कथनं चाप्युपकृतेः श्रुतेत्यंता
सक्तिः पुरुषमभिजातं कथयति

क्ष्म्यां सत्यां निरुत्सेको गर्वाभावः अभिभवो निंदा तद्गंधशून्याः मौनं अनुद्घाटनं सदसि सभायां परेण कृतायाउपकृतेः कथनं श्रुतेः शास्त्रश्रवणे सर्वप्रथमां तानां पुरुषमभिजातं प्रथयतीत्यनेनान्वयः अभिजातं कुलीनं प्रथयति कथयति इतिसमुच्चयालंकारः ७

समाधिरिति कारणांतरसंनिधेर्वशात्कार्यस्यसुकरत्वंसमाधिरलंकारः उत्कंठिता नायकसमीपंगंतुं मानमिति मानोनिराकर्त्तुमस्या
पादयोःपतिष्यतोमम्मोपकारायदिष्ट्याभाग्येनदेघनगर्जितमुदीर्णमुद्गतमित्यन्वयः समुच्चयेकारणानांतुल्यकक्षत्वमिहतुतद्विपरीतमतु

समाधिः कार्यसौकर्यंकारणांतरसंनिधेः उत्कंठिताचतरुणीजगामाम्तंचभानुमान् यथावा मानमस्या
निराकर्त्तुंपादयोर्मेपतिष्यतः उपकारायदिष्ट्यैतदुदितंघनगर्जितं केनचिदारीप्सितस्यकार्यस्यकारणां
तरसन्निधानाद्यत्सौकर्यंतत्सम्यगाधानात्समाधिः द्वितीयसमुच्चयप्रतिद्वंद्वीअयंसमाधिः तत्रबहूनांप्र
त्येकंसमर्थानांखलेकपोतिकान्यायेनयुगपत्कार्यसाधनत्वेनावतारः अत्रत्वेकेनकार्येसमारीप्सिते अन्य
स्यकाकतालीयन्यायेनापतितस्यतत्सौकर्याधायकत्वमात्रं अत्रोदाहरणमुत्कंठितेतिउत्कंठेवप्रियाभिसर
णेपुष्कलंकारणंनांधकाराममपेक्षते अत्यारूढोहिनारीणामकालज्ञोमनोभवइतिन्यायात् देवादापत
तांधकारेणतत्सौकर्यमात्रंकृतमिति एवंद्वितीयोदाहरणेपियोज्यं

ल्यकक्षत्वमितिप्रतिद्वंद्वित्वंतत्रेत्यादिनादर्शितं इतिसमाध्यलंकारः ७, ७,

प्रत्यनीकमिति बलवतः शत्रोः पक्षे पक्षांतः पातिनि तदीये यः पराक्रमस्तत्प्रत्यनीकं नामालंकारः अनीकप्रतिनिधिरूपत्वात् जैत्रेति उत्पला भ्यां स्वजयकारि नेत्रानुसारिणी कर्णौ अधःकृतौ निरस्कृतौ अवतंसतया तदुपरि स्थितत्वाद धस्तात्कृतौ नीचैरिति श्लेषः ममेति भुवि भूलोके मम रूपख्यातिं यो हृतवान् तस्मिन्ननुप्रविष्टमनुरक्तं हृदयं यस्यास्तस्या अनुप्रविष्टहृदयेयस्यां वा नाहगियमिति त्वयि मत्सरादिव खल्वनिश्चितं

प्रत्यनीकं बलवतः शत्रोः पक्षे पराक्रमः जैत्रनेत्रानुगौ कर्णावुत्पलाभ्यामधः कृतौ यथा वा मम रूपकीर्त्तिमहरद्भुवि यस्तदनुप्रविष्टहृदयेयमिति त्वयि मत्सरादिव निरस्तदयः स्फुतरां क्षिणोति खलु तां मदनः एवं बलवति प्रतिपक्षे प्रतिकर्तुमशक्तस्य तदीयबाधनं प्रत्यनीकमिति स्थिते साक्षात्प्रतिपक्षे पराक्रमः प्रत्यनीकमिति किं मुतिकन्यायेन फलति

निरस्तदयो मदनस्तां क्षिणोति क्षीणां करोतीत्यन्वयः अत्र मत्सरादिवेति हेतूत्प्रेक्षा सत्त्वेपि तद्धेतुकप्रतिपक्षसंबंधिबाधनं प्रत्यनीकालंकारस्य विविक्तो विषय इति बोध्यं अत एव मम्मटभट्टैरपि त्वं विनिर्जितमनोभवरूपः सा च सुंदर भवत्यनुरक्ता पंचभिर्युगपदेव शरैस्तां तापयत्यनुशयादिव कामः इत्युदाहृतं एवं च हेतूत्प्रेक्षयैव गतार्थत्वान्नेदमलंकारांतरं भवितुमर्हतीति कस्यचिद्वचनमनोदयं कैमुतिकेति तत्संबंधिबाधनापेक्षया साक्षात्तद्बाधने विशेषादिति भावः ५

मधिविति भ्रमरीधः स्वकीयमधुप्रपारूपस्य पद्मस्य निमीलनेन कुपितः सन् रुधांशोर्बिंबंबलात्समाक्रम्य तस्यांके मध्यभागे कलंकं भ्रव मातनोतीत्यन्वयः इतिमत्यनीकालंकारः कैमुत्येनेति कैमुत्यन्यायेनेत्यर्थः काव्यालंकाररूपार्थापत्तिः काव्यार्थापत्तिः दंडा

यथा मधुव्रतौघः कुपितः स्वकीयमधुप्रपापद्मनिमीलनेन बिंबंसमाक्रम्य बलात्सुधांशोः कलंकमंकं भ्रवमातनोति कैमुत्येनार्थसंसिद्धिः काव्यार्थापत्तिरिष्यते सजितस्त्वन्मुखेनेंदुः कावार्ता सरसीरुहां अत्र सइत्यनेन पद्मानि येनजिता नीतिविवक्षितं तथाच सोपियेनजितस्तेन पद्मानि जितानीति किमुवक्तव्यमिति दंडापूपिकान्यायेन पद्मरूपस्यार्थस्य संसिद्धिः काव्यार्थापत्तिः तांत्रिकाभिमतार्थापत्तिव्यावर्त्तनाय काव्येति विशेषणं यथावा अधरोयमधीराक्ष्याबंधुजीवप्रभाहरः अन्यजीवप्रभां हंत हरतीति किमद्भुतं स्वकीयं हृदयं भित्वा निर्गतौ यौ पयोधरौ हृदयस्यान्यदीयस्य भेदने का कृपातयोः

पूपिकेति दंडाकर्पणे तद्वल्लेनिमा अपूपानामाकर्पणं यथाऽर्थसिद्धं तद्वदित्यर्थः व्यावर्तनायेति लक्ष्यतावारणायेत्यर्थः अधरोयमिति बंधुर्जीवं बंधूकपुष्पं तत्प्रभाहरः बंधुजीवप्रभाहरश्च संवृतलक्षणमयुक्तं कैमुतिकन्यायस्य न्यूनार्थविषयत्वेनाधिकार्थापत्तावव्याप्तेः यथा तवा

ग्रं यदिदारिद्र्यंस्थिलंभूपाद्विजन्मनां शनैः सवितुरप्यग्रे तमः स्थास्यत्यसंशयं अत्र शनैः शब्दमहिम्ना राजाग्रे दारिद्र्यस्थित्यपेक्षया सूर्याग्र
तमोवस्थाने दुःशकमेवेत्यवगतमपि न्यायसाम्यादापाद्यते ननु कैमुतिकन्यायं नतिकेनाचिदुक्तं तत्रेदं वक्तव्यं केनचिदर्थेन तुल्यन्याय
त्वादर्थांतरस्यापत्तिरर्थापत्तिरिति तदुक्तलक्षणमयुक्तं कावार्ता सरसिरुहामित्यादिकैमुत्यन्यायविषयार्थापत्ताव्व्याप्तेः कैमुति
कन्यायस्य न्यूनार्थविषयत्वेन तुल्यन्यायत्वाभावादापादनाप्रतीतेश्चेति नचात्र कैमुत्यन्यायतामात्रं नत्वलंकारत्वमिति युक्तं अ
लंकारतत्वाभियुक्तानां प्राचीनानां शून्यहृदयताया अपामरेण संभावयितुमशक्यत्वात् लोकव्यवहारेपि कैमुत्यन्यायस्य च म
त्कारित्वानुभवेन तेनैव न्यायेन तस्यालंकारतासिद्धेश्च इत्थं च त्वदुक्तार्थापत्त्युदाहरणे वक्ष्यमाणः संभावनालंकारोयं ऽन्ये यथ
र्थो कौन्च कल्पनमिति यद्यर्थातिशयोक्तित्वे नोक्तः यद्यर्थातिशयोक्तावापाद्यापादकयोर्विपरीतार्थविश्रांतत्वमिहत्वापादकम्य
सिद्धत्वमापाद्यस्य संभाव्यमानत्वमिति वैचित्र्यं तु न दवांतरभेदतायाः साधकं न तु तद्बहिर्भूततायाः इति न तत्राव्याप्तिशंकावीत्यलं
विस्तरेण इत्यर्थापत्तिः समर्थनीयस्येति समर्थनापेक्षस्यार्थस्य समर्थनं काव्यलिंगमलंकारः अर्थांतरन्यासवारणाय समर्
र्थनापेक्षस्येति यदा त्वर्थांतरन्यासप्रकरणे वक्ष्यमाणरीत्या सामान्यविशेषभावातिरिक्तत्वं निवेश्यते तदानीं पादयन्नेतदि

तिबोध्यं दुष्करविषयत्वात् [illegible] समर्थनापेक्षस्येत्यनंतरमर्थस्येति शेषः नैय्यायिकेति नैय्यायिकाभिमतलिंगस्य लक्ष्यतावारणायेत्यर्थः भस्मोद्धूलनेति [illegible] क्रममस्त्विति शेषः गिरिसुताकांतस्य शिवस्यालयः प्रासादस्तदलंकारभूतं सोपानपंक्तेइ,

समर्थनीयस्यार्थस्य काव्यलिंगं समर्थनं जितोसि मंद कंदर्प मच्चित्तेऽस्ति त्रिलोचनः अत्र कंदर्पजयोपन्यासो दुष्करविषयत्वात्समर्थनमापेक्षः तस्य मच्चित्तेस्ति त्रिलोचन इति स्वांतःकरणे शिवसन्निधानप्रदर्शनेन समर्थनं काव्यलिंगं व्याप्तिधर्मतामापेक्ष नैय्यायिकलिंगव्यावर्त्तनाय काव्यविशेषणं इदं वाक्यार्थहेतुकं काव्यलिंगं पदार्थहेतुकं यथा भस्मोद्धूलन भद्रमस्तु भवते रुद्राक्षमाले भुभं हा सोपानपरंपरे गिरिसुताकांतालयालंकृते आद्याराधनतोषितेन विभुना युष्मत्सपर्यासुखालोकोच्छेदिनि मोक्षनामनि महामोहे निलीयामहे अत्र मोक्षस्य महामोहत्वमप्रसिद्धमिति तत्समर्थनं सुखालोकोच्छेदिनीति पदार्थो हेतुः कश्चित्पदार्थवाक्यार्थौ परस्परसापेक्षौ हेतुभावं भजतः

त्यपि संबोधनं हेति दैन्ये विभुना प्रभुणा शिवेन युष्माकं या सपर्या पूजा तत्सुखस्यालोकः प्रकाशस्तदुच्छेदके निलीयामहे वयमित्यर्थात्

चिकुरेति चिकुरप्रकराः केशपाशाः विदुषी पण्डिता मादमयन्ती। अपुरस्कृतेन अनादृतेन पुरोभागे आनहितेनच पदार्थश्च अनेकपदार्थश्च वपुरिति पुरा पूर्वस्मिन् कापि जन्मनि कचिदपि क्षणे भवंतं न प्रणतवान् इतीदं वपुषः शरीरस्य प्रादुर्भावादनुमितं संप्रति न मन्

यथावा चिकुरप्रकरा जयन्ति ते विदुषी मूर्द्धनि यान्बिभर्त्ति सा पशुनाप्यपुरस्कृतेन तत्तुलनामिच्छतु चामरेणकः अत्र चामरस्य दमयन्ती कुंतलभारसाम्याभावे विदुषी मूर्द्धनि यान्बिभर्त्ति सेति वाक्यार्थः पशुनाप्यपुरस्कृतेनेति पदार्थश्चेत्युभयं मिलितं हेतुः कचित्समर्थनीयार्थसमर्थनार्थे वाक्यार्थेप दार्थौ हेतुः यथावा वपुःप्रादुर्भावादनुमितमिदं जन्मनि पुरा पुरारे न कापि कचिदपि भवंतं प्रणतवान् नमन्मुक्तः संप्रत्यहमतनुरग्रेप्यनतिमानितीशक्षंतव्यं तदिदमपराधद्वयमपि अत्र ताव दपराधद्वयं समर्थनीयं अस्पष्टार्थत्वात् तत्समर्थनंच पूर्वापरजन्मनोरनमनाभ्यां वाक्यार्थभूता भ्यां क्रियते

नतिं कुर्वन्मुक्तः अतनुरशरीरः अहमग्रेप्यनतिमान्नतिरहितः समर्थनीयं हेतुकथनेनोपपादनी यं अस्पष्टार्थत्वात् अस्पष्टहेतुकत्वात् ७, ७,

अत्र अनयोर्वाक्यार्थयोर्मध्ये द्वितीयवाक्या[illegible] भ्रूव्यनतिमानिनिवाक्यार्थे अत्रापि अतनुत्वेपि नमन्मुक्तइत्यस्यावाक्यत्वाद [illegible]
हृ अनेकपदार्थोवेति असोढेति तपस्यंती भुमीं प्रतिबटुवेषेणागतस्यहरस्यवर्णनं कपटेनयोर्बटोर्ब्रह्मचारिणोवेषस्त्स्यापनयने

अत्रद्वितीयवाक्यार्थेऽतनुत्वमेकपदार्थहेतुः अत्रापिस्वंप्रतिनमन्मुक्तइतिवाक्यार्थोनेकपदार्थोवाहेतुः
क्वचित्परस्परविरुद्धयोः समर्थनीययोरुभयोः क्रमादुभौहेतुभावंभजतः यथा असोढातत्कालोल्लस
द सहभावस्यतपसः कथानांविस्रंभघ्नथच्चरसिकःशैलदुहितुः प्रमोदंवोदिश्यात्कपटबटुवेषापनयनेत्व
राशैथिल्याभ्यांयुगपदभियुक्तः स्मरहरः अत्रशिवस्ययुगपत्कृत्रिमब्रह्मचर्यवेषापनयनत्वरातदनु
वर्त्तनेच्छयोर्विरुद्धयोः क्रमाद्गिरिजातीव्रतपसोमहिष्णुत्वे तत्संल्लापकौतुकंचेत्युभावथौहेतुत्वेननिबद्धौ क्वचि
त्परस्परविरुद्धयोरुभयोः समर्थनीययोरेकएवहेतुः

त्यागत्वराशैथिल्याभ्यांयुगपदभियुक्त आक्रांतः त्वराशै
थिल्यहेतुगर्भक्रमेणविशेषणद्वयमाह तत्कालेउल्लसन्प्रादुर्भवन्नसहभावोदुःसहत्वमर्थात् गौर्यायस्यताहशस्यतपस असोढासह
नासमर्थः शैलकन्यायाःकथानांविस्रंभेषुविश्वासेषुरसिकश्चेति/ ब्रह्मचर्यं ब्रह्मचारिवेषः

जीयादिति अंबुधित्तनयायालक्ष्म्या अधररसमास्वादयन्नयं मुरारिर्जीयात् सर्वोत्कर्षेण वर्त्तताम् कीदृशः समुद्रमथनक्लेशं एवंविधां गनालाभात्स फलं कलयन् जानन् एतदधरमाधुर्यं सत्यमृतस्यैवं यथार्थाद्विफलं च कलयन्नित्यर्थः हे गोदावरीत्यत्रार्णवमध्येत्यादि ब्रह्मविशेषणस्यन्यसनं श्लेषाख्यो गुण इति जयदेवेनोक्तमित्यन्वयः तावकतटोद्देशात्वदीयतीरभूमौ कलिंगाख्यः कविः बहूनां देशानां दर्शने सहचारिणीं विरक्तिमु

यथा जीयादंबुधितनयाधररसमास्वादयन् मुरारिरयं अंबुधिमथनक्लेशं कलयन् विफलं च सफलं च अत्र विफलत्व सफलत्व कलनयोरुभयोर्विरुद्धयोरेकएवांबुधितनयाधररसास्वादो हेतुः इदं काव्यलिंगहेत्वलंकार इति केचिद्व्याजह्रुः हे गोदावरि देविता वकतटोद्देशे कलिंगः कविर्वागुद्देवींबहुदेशदर्शनसखीं त्यक्त्वा विरक्तिंगतः एनामर्णवमध्यसुप्तमुरभिन्नाभीसरोजासनं ब्रह्माणं गमयत्क्षितौ कथमसावेकाकिनी स्थास्यति इत्यत्र ब्रह्मणः प्रापणं कथं गोदावर्याः कर्त्तव्यमित्यसंभाविनीयार्थोपपादकस्यार्णवमध्येत्यादितद्विशेषणस्यन्यसनं श्लेषाख्यो गुण इति

किं एनां सरस्वतीं ब्रह्माणं प्रति गमयनयेति संबंधः कीदृशं अर्णवमध्ये स्फुप्तो यो मुरभिन्मुरारिस्तन्नाभिकमलस्थं श्लेषो ऽविघटमाने त्यत्राकारप्रश्लेषः अविघटमानस्यानुपपद्यमानस्यार्थस्य घटक उपपादको यो ऽर्थस्तस्य वर्णनं श्लेषाख्यो गुण इत्यर्थः ७)

पदार्थहेतुकं समस्तपदार्थहेतुकं पदार्थवाक्यार्थेतिद्वंद्वः प्रतीयमानोर्थः व्यंग्योर्थः प्रतिनिर्देशत्वादिति निर्दिश्यते उच्चार्यतइतिनिर्दे



श्लेषाविघटमानार्थघटकार्थस्यवर्णनमितिश्लेषलक्षणमितिचजयदेवेनोक्तं वस्तुतस्त्वत्रापिपदार्थहेतुकं
काव्यलिंगमेवतद्भेदकाभावात् ननुसाभिप्रायपदार्थवाक्यार्थविन्यसनरूपात्परिकरात्काव्यलिंगस्यकिं
भेदकं उच्यते परिकरेपदार्थवाक्यार्थबलात्प्रतीयमानार्थोवाच्योपस्कारकतांभजतः काव्यलिंगेतुपदार्थ
वाक्यार्थावेवहेतुभावंभजतः ननुयद्यपिस्फुरवालोकोच्छेदिनीत्यादिपदार्थहेतुककाव्यलिंगोदाहरणेअग्रे
प्यनतिमानित्यादिवाक्यार्थहेतुककाव्यलिंगोदाहरणेचपदार्थवाक्यार्थावेवहेतुभावंभजतस्तथापिपशुनाप्य
पुरस्कृतेनेतिपदार्थहेतुकोदाहरणेमच्चित्तेस्तित्रिलोचनइतिवाक्यार्थहेतुकोदाहरणेचप्रतीयमानार्थस्या
पिहेतुकोट्यनुप्रवेशोदृश्यते पशुनेतिह्यविवेकत्वाभिप्रायगर्भं विदुषीत्यस्यप्रतिनिर्देशत्वात्त्रिलोचन
इतिचकंदर्पदाहकतृतीयलोचनत्वाभिप्रायगर्भंकंदर्पजयोपयोगित्वात्तस्य

शः शब्दः तेन विपरीतार्थकशब्द
त्वादित्यर्थः तस्य तादृशत्वतृतीयलोचनत्वस्य तथाचोभयत्रपरिकरालंकारसत्वात्काव्यलिंगोदाहरणत्वमनुपपन्नमितिभावः ७, ७

तयोः पशुनेत्याद्युक्तोदाहरणयोः तदुत्थापितं परिकरोपपादितं व्यंग्यस्य हेतुकोटावेवानुप्रवेशादिति भावः एतदेव विवृणोति प्रतीयमानेति वा
च्यस्यैवेत्येवकारसूचितं व्यंग्याहारकत्वं नहीत्यादिना विवृतं तदयमर्थः यदि पश्वादिपदव्यंग्यकेशपाशसाम्याभावादेरर्थस्य साक्षादुपपादकं
स्यात्तदात्र परिकर एव स्यान्न काव्यलिंगं नत्वेवमस्ति पशुपदप्रतीताविवेकित्वमात्रेण साम्याभावस्योपपादनासंभवात् किंतु तद्विशिष्टपशुपुरस्कृ

सत्यं तथापि तनयोः परिकर एव किंतु तदुत्थापितं काव्यलिंगमपि प्रतीयमानाविवेकविशिष्टेन पशुनाप्युपुरस्कृतलस्या
नेकपदार्थस्य प्रतीयमानकंदर्पदाहकतृतीयलोचनविशिष्टस्य शिवस्य चित्तेसन्निधानस्य च वाक्यार्थस्य वाच्यस्यैव हेतुभावात्
नहि तयोर्वाच्ययोर्हेतुभावे ताभ्यां प्रतीयमानं मध्ये किंचिद्द्वारमस्ति यथा सर्वाशुचिनिधानस्येत्यादिपदार्थपरिकरोदाहरणे
सर्वाशुचिनिधानस्येत्यादिनानेकपदार्थेन प्रतीयमानं शरीरस्यासंरक्षणीयत्वं तथा च वाक्यार्थपरिकरोदाहरणे पर्यायोक्त
विधया तत्तद्वाक्यार्थेन प्रतीयमानं नाहंव्यास इत्यादि तस्मात्पशुनेत्यत्र त्रिलोचन इत्यत्र च प्रतीयमानं वाच्यस्यैव पदार्थस्य
वाक्यार्थस्य च हेतुभावोपपादकतया काव्यलिंगस्यांगमेव

तत्वाभाव एव साक्षादुपपादक इति तत्कोटिनिविष्टं व्यंग्यं काव्यलिंगरूपस्य तस्यां
... व्यंग्यांतरं तु नोक्तकाव्यलिंगगम्यमर्थोपपादकमस्तीति निराबाधमेव काव्यलिंगमिति ननु स्वयमन्योपपादकस्य काव्यलिंगस्याप्युपपाद
कं कदृष्टमित्याशंक्योदाहरति

यत्वन्नेत्रेति एतत्प्रतीपालंकारे प्रागुदाहृतं अनेकवाक्यार्थहेतुकेति पूर्वपादत्रयवाक्यार्थत्रयस्य चतुर्थपादार्थे हेतुत्वमिति ज्ञेयं हेतुभावोप पादकानीति इंदीवरस्य नेत्रसमानकांतित्वं विनापटादेरिव तद्दर्शनस्य दैवगतकांतासादृश्यविनोदासहिष्णुत्वे हेतुत्वासंभवादिति भावः 

यथा यत्वन्नेत्रसमानकांतिसलिले मग्नं तदिंदीवरमित्यनेकवाक्यार्थहेतुककाव्यलिंगोदाहरणे त्वन्नेत्रसमानकांतीत्यादिकानि इंदीवरशशिहंसविशेषणानि तेषां वाक्यार्थानां हेतुभावोपपादकानीति तत्र वाक्यार्थहेतुककाव्यलिंगपदार्थहेतुककाव्यलिंगमंगमिति न तयोः काव्यलिंगोदाहरणत्वे काचिदनुपपत्तिः उक्तिरर्थांतरन्यासः स्यात्सामान्यविशेषयोः हनुमानब्धिमतरद्दुष्करं किं महात्मनां गुणवद्वस्तुसंसर्गाद्याति स्वल्पोपि गौरवं पुष्पमालानुषंगेन सूत्रं शिरसि धार्यते सामान्यविशेषयोर्द्वयोरप्युक्तिरर्थांतरन्यासस्तयोश्चैकं प्रस्तुतं अन्यदप्रस्तुतं भवति ततश्च विशेषे प्रस्तुते तेन सहाप्रस्तुतसामान्यरूपस्य सामान्ये प्रस्तुते तेन सहाप्रस्तुतविशेषरूपस्यार्थांतरस्य न्यसनमर्थांतरन्यास इत्युक्तं भवति तत्राद्यस्य द्वितीयार्द्धमुदाहरणं द्वितीयस्य द्वितीयश्लोकः

समाहितमर्थमुपसंहरति इतीति तयोः पशुनापीति मच्चित्ते स्तीत्येतयोः इति काव्यलिंगालंकारः ७ ७ ७ 

प्रस्तुतव्यंजकतयेति अप्रस्तुताभिधानंयुज्यतइत्यनुषज्यते एवमग्रेपि विस्रब्धेति खलस्यविश्वस्तघातरूपोदोषः स्वस्यैवनधायभपालयतेवी राणांकोपकारकः। सिंहनिद्रापहारीनवतरुभंगजन्यध्वनिः करिणोवधाययथेत्यर्थः तददर्शनात् उपमानत्वादर्शनात् ननु अप्रस्तुतप्रशंसाकृतिरि

नन्वयंकाव्यलिंगान्नातिरिच्यते तथाहि उदाहरणद्वयेप्यप्रस्तुतयोः सामान्यविशेषयोरुक्तिः प्रस्तुतयोर्विशेषसा मान्ययोः कथमुपकरोतीति विवेक्तव्यं नहिसर्वथैवप्रस्तुतानन्वय्यप्रस्तुताभिधानेयुज्यते नतावदप्रस्तुत प्रशंसायामिदप्रस्तुतव्यंजकतयाप्रस्तुतयोरपि विशेषसामान्ययोः स्वशब्दोपात्तत्वान्नाप्यनुमानालंकारइव प्रस्तुतप्रतीतिजनकतया तद्धेतुरिह व्याप्तिपक्षधर्मताद्यभावात् नापिदृष्टांतालंकारइवउपमानतया विस्र ब्धघातदोषः स्ववधायखलस्यवीरकोपकरः नवतरुभंगध्वनिरिवहरिनिद्रातस्करः करिणइत्यादिषुसामा न्येविशेषस्योपमानत्वदर्शनेपिविशेषेसामान्यस्यक्वचिदपितददर्शनात् उपमानतयातदन्वयेसामंजस्या प्रतीतेश्च तस्मात्प्रस्तुतसमर्थकतयैवाप्रस्तुतस्योपयोगइहापिवक्तव्यः वगंभीरेयमस्याकृतिरित्यादौसामान्य स्याप्युपमानताहरेत्यरुचेराह उपमानतेति इयाद्यभावात्तात्पर्याभावाच्च उपमानतयाऽन्वयस्यसामंजस्येनाप्रतीतेरित्यर्थः इहापीत्यपिनाकाव्य लिंगसमुच्चयः

प्रतीतिविभवात् प्रतीतिदार्ढ्यरूपप्रयोजनवशात् प्रयोजनस्यापिहेतुत्वविवक्षयापंचमी उक्तवैलक्षण्यमुदाहरणनिष्ठतयाद र्शयति नहीत्यादिना इत्यादिकाव्यलिंगोदाहरणेष्विव अथेत्याद्यर्थांतरन्यासोदाहरणेषु प्रसक्तस्य समर्थनार्थित्वं नह्यस्तीति संबंधः

ततश्च वाक्यार्थहेतुकं काव्यलिंगमेवात्रापि स्यान्नत्वलंकारांतरस्यावकाश इतिन्चे
त् अत्र केचित्समर्थनसापेक्षस्यार्थस्य समर्थने काव्यलिंगं निरपेक्षस्यापि प्रती
तिवैभवात् समर्थनेऽर्थांतरन्यासः नहियत्वन्नेत्रसमानकांतीत्यादिकाव्यलिंगोदा
हरणेष्विव अथोपगूढे शरदाशशांकेप्रावृड्ययौ शांततडित्कटाक्षा कासांन
सौभाग्यगुणोंगनानां नष्टः परिभ्रष्टपयोधराणां

शरदा शशांके उपगूढे आलिंगिते सति अथानंतरं शांतास्तडिद्रूपाः कटाक्षायस्याः सा प्रावृट् ययौ गतवती उक्तं विशेषरूप मर्थं सामान्यरूपेणार्थांतरेण समर्थयति परिभ्रष्टपयोधराणां कासामंगनानां सौभाग्यगुणो न नष्ट इति पयोधराः कुचामेघाश्च

दिवाकरादिति कुमारसंभवे हिमालयवर्णनं भोहिमालयः भवतं मदीयनाबुद्धिः शिरोमस्तकं शिखरंच समर्थनार्थित्वं स

नदिवाकराद्रक्षतियोगुहास्वलीनंदिवाभीतमिवांधकारं क्षुद्रेपिनूनंशरणंप्रपन्नेममत्वमु
च्चैःशिरसामतीव इत्याद्यर्थांतरन्यासोदाहरणेषुप्रस्तुतस्यसमर्थनापेक्षत्वमस्तीति वस्तुनस्तु
प्रायोवादोयं अर्थांतरन्यासेपिहिविशेषस्यसामान्येनसमर्थनानपेक्षत्वेपिसामान्यविशे
षेणसमर्थनमपेक्षतएवनिर्विशेषंनसामान्यमितिन्यायेन बहूनामप्यसाराणांसंयोगःका
र्यसाधकइत्यादिसामान्यस्य तृणैरारभ्यतेरज्जुस्तयानागोपिबध्यतइत्यादिसंप्रतिपन्न
विशेषावतरणंविनाबुद्धौप्रतिष्ठितत्वासंभवात्

मर्थनापेक्षत्वं अयं अर्थांतरन्यासेसमर्थनानपेक्षत्वरूपः सामान्यस्येत्यस्यबुद्धौप्रतिष्ठितत्वासंभवादित्यनेनान्वयः ७ ७

संप्रतिपन्नेति वक्तृश्रोतृसंमतेत्यर्थः विशेषावतरणं विशेषावगमं तत्र बहूनामित्यादौ सामान्यस्येति विशेषावतरणाविनेवबु



न च तत्र सामान्यस्य कासां न सौभाग्यगुणोंऽगनानामित्यादि विशेषसमर्थनार्थसामान्यस्येव लोक
संप्रतिपन्नतयाविशेषावतरणं विनेवबुद्धौ प्रतिष्ठितत्वं संभवतीति श्लोके तन्न्यसनेनापेक्षित
मस्तीति वाच्यं सामान्यस्य सर्वत्र लोकसंप्रतिपन्नत्वनियमाभावात् नहि यो यो धूमवान्सो
ग्निमानिति व्याप्तिरूपसामान्यस्य लोकसंप्रतिपन्नतया यथा महानस इति तद्विशेषरूपे दृष्टांता
नुपादन संभवमात्रेणा प्रसिद्धव्याप्तिरूपसामान्योपन्यासेपि तद्विशेषरूपदृष्टांतोपन्यास
नैरपेक्ष्यं संभवति नचैवं सामान्येन विशेषसमर्थनस्थलेपि क्वचित्तस्य सामान्यस्य लोक
प्रसिद्धत्वाभावेन तस्य बुद्धावारोहाय पुनर्विशेषांतरस्य न्यासप्रसंग इति वाच्यं इष्टापत्तेः अ
नैवंविधैवैकस्वरालंकारस्यानुपदमेव दर्शयिष्यमाणत्वात्

द्धौ प्रतिष्ठितत्वं संभवतीत्याग्रेमेणान्वितं तन्न्यसनं तृणेत्यादिविशेषन्यसनं

नन्वेवमप्यर्थांतरन्यासे कचिदेव समर्थनापेक्षा काव्यलिंगे तु सर्वत्र से ति स्फुट भेद इत्याशंक्याह किंचेति कविकुलक्षुण्णत्वेन कविसमूहाभ्यस्त

किंच काव्यलिंगे पि न सर्वत्र समर्थन सापेक्षत्वनियमः चिकुरप्रकराजयंति तेन इत्यत्र तद्
भावादुपमानवस्तुषु वर्णनीय साम्याभावेन निंदायाः कविकुलक्षुण्णत्वेनात्र समर्थनापे
क्षाविरहात् नहितदास्यदास्येपिगतोधिकारितां न शारदः पार्वणशर्वरीश्वर इत्यादि
षु समर्थनं दृश्यते नविषेण न शस्त्रेण नाग्निना न च मृत्युना अप्रतीकारपारुष्याः स्त्री
भिरेव स्त्रियः कृताः इत्यादि काव्यलिंगविषयेषु समर्थनापेक्षाविरहेपि अप्रतीकारपारु
ष्या इत्यादिना समर्थनदर्शनाच्च

त्वेन तदास्यदास्येन लमुखदास्ये पर्वणि पूर्णिमायां भवः पार्वणः
शार्वरीश्वरश्चंद्रः नविषेणेत्यादेः स्त्रियः कृता इत्यनेनान्वयः अपितु स्त्रीभिरेव यतः प्रतीकाररहितं पारुष्यं क्रौर्यं यासां तथाभूताः

उभयतः अन्वयव्यतिरेकाभ्यां समर्थनापेक्षायामपितदास्यदास्येपीत्यादौतदभावात् नविषेणत्वादवपेक्षाविरहेपिसमर्थनसत्वात् अप्रकृतेनेति आद्येमहात्मनांसर्वक्ककरत्वेनाप्रकृतेनसामान्येनहनूमदब्धितरणस्यप्रकृतविशेषस्यसमर्थनं द्वितीयेपुष्पमालासूत्रवृत्तांतेनाप्रकृतेनविशेषरूपेण प्रकृतस्यगुणवत्संगप्रयुक्तपूज्यत्वस्य सामान्यरूपस्यसमर्थनमित्यर्थः यदुच्यतइति

नहितत्रस्त्रीणांविषादिनिर्मितत्वाभावप्रतिपादनंसमर्थनसापेक्षंप्रसिद्धत्वात्तस्मादुभयतोव्यभिचारात्समर्थनापेक्षसमर्थनेकाव्यलिंगं तन्निरपेक्षसमर्थनेऽर्थांतरन्यासइतिनविभागः किंतुसमर्थ्यसमर्थकयोःसामान्यविशेषसंबंधेऽर्थांतरन्यासस्तदितरसंबंधेकाव्यलिंगमित्येवव्यवस्थावधारणीया प्रपंचश्चित्रमीमांसायांद्रष्टव्यः एवमप्रकृतेनप्रकृतसमर्थनमुदाहृतं प्रकृतेनाप्रकृतसमर्थनंयथा यदुच्यतेपार्वतिपापवृत्तयेनरूपमित्यव्यभिचारितद्वचः तथाहितेशीलमुदारदर्शनेतपस्विनामप्युपदेशतांगतं

हेपार्वतिरूपंआकेलिसौंदर्यं पापवृत्तयेदुष्टाचरणायनभवतियत्राकृतिस्तत्रगुणावसंतीतिन्यायादितियदुच्यतेतद्वचनमव्यभिचारियथार्थं तथाहि उदारंरमणीयंदर्शनंयस्यास्तथाभूतेपार्वतितवशीलंआचरणं तपस्विनामप्युपदेशतांरूपतांप्राप्तमितिप्रकृतेनविशेषेणाप्रकृतस्यसामान्यस्यसमर्थनं

दानमिति दानं वितरणं मदजलं च जलैरुदकैः जडैश्च लडयोरभेदात् अधिरूढे आक्रांते सति विद्यमानगतिः सगतिकः बुद्धिमांश्चकः आसितुं स्थातुं उत्सहेत शक्नुयात् यस्मात् मिमंक्षोर्मज्जनं कर्तुमिच्छोर्दन्तिनो गजस्य कटो गंड एव कटाहस्तस्य तटाद्ग्राद्दलीनां पटलैः समूहैः परितो मंक्षु शीघ्रं उद्याति उत्पतितमित्यन्वयः अत्रापि पूर्वार्द्धोक्तमप्रकृतसामान्यमुत्तरार्द्धोक्तेन प्रकृतेन विशेषेण

य[illegible] दानं ददत्यपि जलैः सहसाधिरूढे को विद्यमानगतिरासितुमुत्सहेत यद्दन्तिनः कटकटाहतटान्मिमं
क्षो[illegible]द्पाति परितः पटलैरलीनां यस्मिन्विशेषसामान्यविशेषाः स विकस्वरः स नाजिग्यो महांतो हि दु
दु[illegible]ः सागरा इव

समर्थितम् इत्यर्थांतरन्यासालंकारः यस्मिन्निति यस्मिन्काव्ये इत्यर्थात् निबध्यत इति शेषः समर्थ्यसमर्थकभावापन्नत्वं तु न लक्षणे निवेशनीयं तद्विनाचमत्काराभावेन चमत्कारित्वविशेषणेनावश्यवक्तव्येनैवानतिप्रसंगात् एवमेवार्थांतरन्यासलक्षणं विबोध्यम् स नेति स प्रकृतो राजा न जिग्ये न जितोऽर्थात्परैरिति विशेषः प्रकृतः तत्समर्थनं महांतो हि दुर्धर्षा अनाक्रमणीया इति सामान्येन तस्यापि सागरा इवेति विशेषोपमयेति ज्ञेयं

प्रसिद्धेरल्पत्वात्तत्रापरितोषो बोध्यः यथाकथंचिदिति महतामनाक्रमणीयत्वस्याति प्रसिद्धत्वेन तत्समर्थनापेक्षाभावाच्चंद्रालोकगलमेत

यत्र कस्यचिद्विशेषस्य समर्थनार्थं सामान्यं विन्यस्यत तत्प्रसिद्धावपि अपरितुष्यता कविना तत्सम र्थनाय पुनर्विशेषांतरमुपमानरीत्यार्थांतरन्यासविधया विन्यस्यते तत्र विकस्वरालंकारः उ त्तरार्धे यथाकथंचिदुदाहरणं इदं तु व्यक्तमुदाहरणं अनंतरत्नप्रभवस्य यस्य हिमं न सौभा ग्यविलोपि जातं एको हि दोषो गुणसन्निपाते निमज्जतींदोः किरणेष्विवांकः इदमुपमानरीत्या विशेषांतरस्य न्यसने उदाहरणं अर्थांतरन्यासविधया यथा कर्णारुंतुदमंतरेण रणितं गाहस्व काक स्वयं माकंदं मकरंदशालिनमिह त्वां मन्महे कोकिलं धन्यानि स्थलवैभवेन कतिचिद्व स्तूनि कस्तूरिकां नेपालक्षितिपालभालपतिते पंके न शंकेतकः मालिन्यमञ्जनराशिनोर्मधुलिट्कुलं कौक्षेत्तो सुखे तु तवदकुतिलकांजनाभां दोषावितः क्वचनमेलनतो गुणलवकुर्गुणो हि क्वचसिभ्रमविभ्रलेमो

असमंजसमिति भावः इदं वक्ष्यमाणं व्यक्तमिति गुणसमुदाये एकस्य दोषस्यानाकलनमनतिप्रसिद्धतया समर्थनापेक्ष मिंदो

रित्यादिविशेषेणं समर्थ्यंत इत्यतः स्फुटमित्यर्थः कर्णेति हे काक कर्णयोररुंतुदं पीडाजनकं रणितं शब्दितं अंतरेण विना स्वयं मकरंदः
पुष्परसस्तत्शालिनं माकंदमाम्रवृक्षं गाहस्व आश्रय इहाम्रतरौ त्वां वयं कोकिलं मन्महे जानीमहे यतः स्थलवैभवेन स्थानमाहात्म्येन कं
तिचिद्वस्तूनि धन्यानि भवंतीति सामान्येन पूर्वोक्तविशेषसमर्थनं अत्रापि तदाकांक्षायां विशेषरूपमर्थांतरंन्यसति नेपाल भू
मिपालस्य भाले पतिते पंके कस्तूरिकां को न शंकेतापितु सर्व इति मालिन्यमिति मधुलिट् भ्रमरः कलंकश्चैतौ अब्जशशिनोर्मालि
न्यं धत्तः कुरुतः तव मुखे तु दृक् च तिलकांजनं च तयोराभां शोभां धत्त इत्यनुषज्जते अंजनाभे इतिपाठे द्वितीयाद्विवचनं उक्तमर्थं
सामान्येन समर्थयति दोषावपि कस्मिंश्चित् ...नतो मिथो मिलनात् गुणत्वं इतः प्राप्नुत इति कथमेतत्तत्राह हि यतः ...
म विप्रलंभो भ्रांतिप्रतारणे गुणो भवतः घट इति घटाभावं निर्णीय परप्रतारणाय घटोस्तीति प्रयुक्ते वाक्ये भ्रमाजनकत्वात् ... योग्य
णत्वमिति भावः इति विकस्वरालंकारः ७, ७, ७, ७,

प्रौढोक्तिरिति उत्कर्षस्याहेतावुत्कर्षहेतुत्वकल्पनं प्रौढोक्तिः कलिंदजा यमुना स्तोमः समूहः मेचकाः श्यामाः रोहणे उद्भवे कल्पेति एषराजा कल्पवृक्षादीनां क्रमेण रजोभरादिभिः पंचभिर्भूतै रचित इत्यन्वयः धनदः कुबेरः शंखो निधिविशेषः रजोभरः परागसमूहः पयोद-

प्रौढोक्तिरुत्कर्षहेतौ तद्धेतुत्वप्रकल्पनं कचाः कलिंदजातीरतमालस्तोममेचकाः कार्यातिशयाहेतौ तद्धेतुप्रकल्पनं प्रौढोक्तिः यथा तमालगतनैल्यातिशयाहेतौ यमुनातटरोहणे तद्धेतुत्वप्रकल्पनं यथा वा कल्पतरुकामदोग्ध्रीचिंतामणिधनदशंखानां रचितो रजोभरपयस्तेजःश्वासांतरैर्बरैरेषः अन्नकल्पवृक्षाद्येकैकवितरणातिशायिवर्णनीयराजवितरणातिशयाहेतौ कल्पवृक्षपरागादिरूपपंचभूतनिर्मितत्वेन तद्धेतुत्वप्रकल्पनं प्रौढोक्तिः

ग्धं श्वासः प्रसिद्धः अंतरांबरं शंखाभ्यंतरमाकाशं अतिशायीत्यग्रिमवितरणेनान्वितं अहेतौ पंचनिर्मितत्व इति सामानाधिकरण्येनान्वयः इति प्रौढोक्तिः ७

संभावनेति ऊहस्तर्कः कस्तूरिकेति अहं यदि सृष्टिकर्त्ता स्यां तदा कस्तूरिकामृगाणामंडादखिलं गंधरूपं गुणमादाय खलजिह्वा
यां निवेशयिष्यामीत्यन्वयः इति संभावना किंचिदिति कस्यचिदर्थस्य मिथ्यात्वसिध्यर्थं मिथ्याभूतार्थांतरकल्पनं मिथ्याध्यवसिति

संभावना यदीत्थं स्यादित्यूहोन्यस्य सिद्धये यदि शेषो भवेद्वक्ता कथिताः स्युर्गुणास्तव य
थावा कस्तूरिकामृगाणामंडाद्गंधगुणमखिलमादाय यदि पुनरहं विधिः स्यां खलजिह्वायां
निवेशयिष्यामि यद्यर्थोक्तौ च कल्पनमतिशयोक्तिभेद इति काव्यप्रकाशकारः किंचिन्मि
थ्यात्वसिध्यर्थं मिथ्यार्थांतरकल्पनं मिथ्याध्यवसितिर्वेश्यां वशयेत्खस्रजं वहन् अत्र वेश्याव
शीकरणस्यात्यंतासंभावितत्वसिद्ध्ये गगनकुसुममालिकाधारणरूपार्थांतरकल्पनं मिथ्या
ध्यवसितिः

रलंकारः वेश्यामित्युदाहरणं खस्रजं गगनमालां अत्र खपुष्पमालाधारणमिव वेश्यावशीकरणमिति निदर्शनापि बोध्या ७

अस्यान पगर्वपस्यापरार्द्धसंख्यामतिक्रांतया लक्ष्मीकृताउपलक्षिताः प्रज्ञाचक्षुषा अंधेनावेक्ष्यमाणाश्रवता बधिरश्राव्याश्चेतिकर्मधार
यः कलयताकुर्वता प्रकरेण समूहेन कूर्मरमणीकच्छपी रोधसितीरे मिथ्याध्यवसितेरित्यस्य भेदइत्यत्रान्वयः कल्पनाविच्छित्तिविशेषे
ण कल्पनाप्रयुक्तविच्छित्तिविशेषेण कल्पानात्मनेतिपाठे कल्पनास्वरूपेणेत्यर्थः उपधेयसंकरेप्युपाधेरसंकरात् विछितिविशेषेणे

यथावा अस्यक्षोणिपतेः परार्धपरयालक्ष्मी कृताः संख्ययाप्रज्ञाचक्षुरवेक्ष्यमाणबधिरश्राव्याः किलाकीर्त्तयः
गीयंते स्वरमष्टमं कलयताजातेनवंध्योदरान्मूकानांप्रकरेणकूर्मरमणीदुग्धोदधेरोदसि अत्राद्योदाहरणं
निदर्शनागर्भं द्वितीयंतुशुद्धं असंबंधे संबधरूपातिशयोक्तितो मिथ्याध्यवसितेः किंचिन्मिथ्यात्वसिध्यर्थं मि
थ्यार्थांतरकल्पनात्मनाविच्छित्तिविशेषेणभेदः तिच तस्यैवविशेषणं विछित्तेर्विशेषोयस्मादितिविछित्तिविशेषपदान्व्यावर्त्त
यतीतिवाव्युत्पत्तेः एतेनप्रौढोक्त्यैव गतार्थतामाचक्षाणा निरस्तावेदितव्याः नचमिथ्याध्यवसितेरलंकारांतरत्वे हरिश्चंद्रेण संज
ल्पाः प्रगीताधर्मसूनुना खेलंति निजमोत्संगे मातर्गंगे गुणास्तवेत्यादौ हरिश्चंद्रादिसंबंधाद्गुणानांसत्यताप्रतीतेः सत्याध्यवसितिर
पितथास्यादितिवाच्यं सत्यताप्रतीत्यर्थं कस्याप्यर्थस्य कविप्रतिभाकल्पितत्वाभावेनशब्दमात्रेणालंकारतायाअसंभवात् कविप्र

तिभामात्रकल्पिताअर्थाः काव्ये अलंकारपदास्पदमिति विषमालंकारप्रकरणेत्वयैवाभिधानादित्यलंविस्तरेण इतिमिथ्याध्यवसितिः प्रस्तुतइ
ति ललितमितिलक्ष्यनिर्देशः निर्गतइत्युदाहरणं दाक्षिण्येत्यादिक ग्रन्थ्यांत चतुष्टयंनायकविशेषणं दाक्षिण्यं अनुरोधशीलत्वं तद्व्यापारेति

वर्ण्यस्याप्रवर्ण्यवृत्तांतप्रतिबिंबस्यवर्णनं ललितंनिर्गतेनीरसेतुमेषाचिकीर्षति प्रस्तुतेधर्मिणियोवर्णनीयोवृत्तांत
स्तमवर्णयित्वातत्रैवतत्प्रतिबिंबरूपस्यकस्यचिदप्रस्तुतवृत्तांतस्यवर्णनंललितं यथाकथंचिद्दाक्षिण्यसमागत
तत्कालोपेक्षितप्रतिनिवृत्तनायिकांतरासक्तनायकानयनार्थंसखींप्रेषयितुकामां नायिकामुद्दिश्यसख्याभननेनत
द्व्यापारप्रतिबिंबभूतगतजलसेतुबंधवर्णनं नेयमप्रस्तुतप्रशंसा प्रस्तुतधर्मिकत्वात् नापिसमासोक्तिः प्रस्तु
तवृत्तांतेवर्ण्यमानेविशेषणसाधारण्येनसारूप्येणवा अप्रस्तुतवृत्तांतस्फूर्त्यभावात् अप्रस्तुतवृत्तांतादेवसरूपा
दिहप्रस्तुतवृत्तांतस्यगम्यत्वात् नापिनिदर्शना प्रस्तुताप्रस्तुतवृत्तांतयोः शब्दोपात्तयोरैक्यसमारोपएवतस्याः समुन्मेषात्

सखीप्रेषणरूपनायिकाव्यापारसरूपेत्यर्थः सारूप्यंचात्रनेरर्थक्यं कुसालंकारेष्वंतर्भावमाशंक्यनिराकरोतिनेयमित्यादिना प्रस्तु
ताप्रस्तुतेति तथाचप्रकृतेऽप्रस्तुतवृत्तांतस्यैकस्यैवोपादानान्निदर्शनानयुक्तेतिभावः

कुतोनघटतेतत्राह अप्रस्कृतइति एतच्चभ्रमरासेव्यत्वइत्यस्यविशेषणं भ्रमरनिरासकरणस्येतिचकर्णचापलमात्रस्येत्यस्यक्रोडीका
रः स्वार्थेनमममभेदाध्यवसायः अप्रस्तुतसंबोधनादिति आदिनासारूप्यनिबंधनप्रस्तुतवाक्यार्थावगतिपरिग्रहः अत्रापिललित

अप्रस्तुतधारणस्यभ्रमरासेव्यत्वेकर्णचापलमात्रस्यभ्रमरनिराकरणहेतुत्वसंभवेपिरसनाविपर्ययांतःशून्यकरत्वशो
हेतुत्वासंभवेनभदस्यप्रस्तुततत्सेव्यत्वएवहेतुत्वेनचरसनाविपर्ययादीनांतत्रहेतुत्वान्यथार्थवारणपदस्यदुष्प्रभुरूपवि
षयक्रोडीकारेणैवप्रवृत्तेर्वक्तव्यत्वात् एवंसत्यपियद्यप्रस्कृतसंबोधनादिविच्छित्तिविशेषात्तत्राप्रस्तुतप्रशंसायाअ
तिशयोक्तितोभेदोघटते तदात्रापिप्रस्तुतंधर्मिणंस्वपदेननिर्दिश्यतत्राप्रस्कृतवर्णनारूपस्यविच्छित्तिविशेषस्य
सद्भावात्ततोभेदःस्कुतरांघटते पश्यनीलोत्पलद्वंद्वान्निसरंतिवार्पीकापिस्फुरतिगगनेतत्परंसूक्ष्मपद्येत्यादेरप्र
प्रस्तुतस्यकस्यचिद्धर्मिणःस्ववाचकेनानिर्दिष्टत्वादतिशयोक्तिरेवैतेनगतजलसेतुबंधवर्णनादिष्वसंबंधेसंबंधाति
शयोक्तिरस्त्वितिशंकापिनिरस्ता लंकारेपि वर्णनारूपस्येति चमत्कारितारूपायाविच्छित्तेस्तदवच्छेदकवर्णनारूपत्वमित्याभि
प्रायः कस्यचित् नेत्रद्वंद्वादेःस्ववाचकेननेत्रादिपदेन अनिर्दिष्टत्वात् अप्रतिपादितत्वात् अतिशयोक्तिरस्तीति अतिशयोक्तिरस्त्वे
त्यर्थः

तत्प्रसंगात् संबोध्यत्वां ज्वारयितृत्वयोरसंबंधेपि संबंधवर्णनादतिशयोक्तिमात्रप्रसंगात् अलंकारांतरं कस्त्वमित्यादावप्रस्तुतप्रशं
सा प्रकृतेतुलक्षितमिति तत्प्रतिबिंबेति प्रस्तुतार्थप्रतिबिंबरूपस्याप्रस्तुतार्थस्येत्यर्थः आदौ पूर्वार्द्धे विषमेति स्वमतिसूर्यवंशयो

तथा सति कस्त्वं भोः कथयामीत्यादावपि तत्प्रसंगात्सारूप्यनिबंधनप्रस्तुतवाक्यार्थावग
तिरूपविच्छित्ति विशेषालंकारांतरकल्पनं त्विहापि तुल्यं तस्मात्सर्वालंकारविलक्षण
मिदं ललितं यथा वा क सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः तितीर्षुर्दुस्तरं मोहादु
डुपेनास्मि सागरं अत्रापि निदर्शनाभ्रांतिर्न कार्या अल्पविषयया मत्या सूर्यवंशं वर्णयि
तुमिच्छुरहमिति प्रस्तुतवृत्तांतानुपन्यासात्तत्प्रतिबिंबभूतस्य उडुपेन सागरं तिती
र्षुरस्मीति अप्रस्तुतवृत्तांतस्य वर्णनेनादौ विषमालंकारविन्यसनेन च केवलं तत्र ता
त्पर्यस्य गम्यमानत्वात् यथा वा

रत्यंताननुरूपत्वरूपेत्यर्थः तात्पर्यस्य सादृश्यमतिकरणक सूर्यवंशवर्णनेच्छाभिप्रायस्य ७, ७,

अनायीति नलंप्रतिदमयन्त्या उक्तिः हे नल अधन्या कतमो देशः वसंतमुक्तस्य वनस्य दशामनायि प्रापितः त्वयि प्राप्तसंकेततया कृतार्थासंज्ञानामापि अनेन अक्षिगोचरजनेन न आव्या नअर्णाहा अपितु अन्यैवेति अत्र च नादृशावनदशारूपस्याप्रस्तुतार्थस्य प्रस्तुते देशे कथनात्स्वकलहन्तांतस्योक्तरूपस्य प्रतीतिः न चात्र पूर्णचंद्रलीलामितिवत्पदार्थनिदर्शनायुक्तिवाच्यं अत्र पूर्वार्द्धेन प्रकृतवृत्तांतोपादानेन सा

अनायि देशः कतमस्त्वया द्यवसंतमुक्तस्य दशां वनस्य त्वदाप्तसंकेततया कृतार्था
श्राव्यापि नानेन जनेन संज्ञा अत्र कतमो देशस्त्वया परित्यक्त इति प्रस्तुतार्थमनु
पन्यस्य वसंतमुक्तस्य वनस्य दशामनायीति तत्प्रतिबिंबभूतार्थमात्रोपन्यासा
ल्ललितालंकारः

द्वयपर्यवसानरूपनिर्देशनासत्वेप्यत्र तदनुपादानेन तद्व्यंग्यता प्रयुक्तवि
च्छित्तिविशेषवत्वेन ललितालंकारस्यैवोचितत्वात् एतेन दशापदलक्षितानिःश्रीकत्वरूपकार्यद्वारेण कारणस्य राजकर्तृकत्यागक
र्मत्वस्याभिधानात्पर्यायोक्तमित्यपि निरस्तम् उपधेयसंकरेप्युपाधेरसंकराच्चेति संक्षेपः इति ललितं ७ ७, ७

तामेवेति दूतिकामेवेत्यर्थः निसृष्टा प्रेषिता. ससंकल्पां मनोरथसहितां मेधैरिति मेदुरं तुंदिलं नक्तंरात्रिर भीतिरीपः नंदनिदेशातः नंद
स्याज्ञावशात् प्रत्यध्वकुंजद्रुमं अध्वसंबंधिकुंजद्रुमद्रुमंप्रति ग्रंथकारेण गीतगोविंदकृता चातकइति यतुचातकस्यातिचतुरकणमात्रार्थित

उत्कंठितार्थसंसिद्धिर्विनायत्नंप्रहर्षणं तामेवध्यायतेतस्मैनिसृष्टासैवदूतिका उत्कंठाइच्छाविशे
षः सर्वेंद्रियस्फुरत्स्वादो यत्रास्तीत्यभिमन्यते तत्प्राप्तीच्छां ससंकल्पामुत्कंठां कवयो विदुरित्युक्त
लक्षणात् तद्विषयस्यार्थस्य तदुपायसंपादनयत्नंविनासिद्धिः प्रहर्षणं उदाहरणं स्पष्टं यथावा मेघै
र्मेदुरमंबरंवनभुवः श्यामास्तमालद्रुमैर्नक्तंभीरुरयंत्वमेवतदिमंराधेगृहंप्रापय इत्थंनंदनिदेशत
श्चलितयोः प्रत्यध्वकुंजद्रुमंराधामाधवयोर्जयंतियमुनाकूलेरहःकेलयः अत्रराधामाधवयोःप
रस्परमुत्कंठितत्वंप्रसिद्धतरमयेचग्रंथकारेणनिबद्धमित्यत्रोदाहरणेलक्षणानुगतिः वांछितादधिकार्थस्यसं
सिद्धिश्चप्रहर्षणं दीपमुद्योजयेद्यावत्तावदभ्युदितोरविः स्पष्टं यथावा चातकस्त्रिचतुरान्पयःकणान्याचतेजल
धरंपिपासया

मा गलदकर्तृकेणांभसा विश्वपूरणेन हर्षाधिक्याभावादयुक्तमुदाहरणमिति तदुक्तं हेलासिद्धेः

३

नहि क्षुदुपशमाय तत्पर्याप्तान्नमात्रार्थिनस्तदधिकान्नलाभे हर्षाधिक्यं नास्तीति वक्तुं शक्यते तदानीमुपयोगाभावेपि स्वस्यैव कालांतरे तदुपयोगसत्वात् न च चातकस्य जलसंग्रहानुपयोगाद्वैषम्यं शंकनीयं चातकवृत्तांतस्याप्रस्तुततया तद्व्यंग्ये प्रस्तुतदातृयाचकवृत्तांते काव्यस्य पर्यवसानादिति तृतीयप्रभेदमाह यत्नादिति प्रहर्षणमित्यनुवर्तते निध्यंजनेति निधिदर्शनसाधनं यदंजनं तत्साधनौषधीमूलमित्यर्थः

सोपि प्रहर्षणं विष्वमेव स्यादिदं तदेतदं ... 

साधितालब्धः उच्चित्येति अधःस्थितं वृक्षस्याधोदेशेस्थितं अवस्थितमिति पाठे समीपाशोकयष्टाववस्थितमित्यर्थः श्रिता आश्रिताः विटपाः शाखा येनेति पुष्पौघविशेषणं अदधात् आहितवती यष्टिः स्कंधः तेन पादाघातेन पुनरप्यामूलं पुष्पिताभूदर्थादशोकयष्टिः अत्र च तदसाध्यकयत्नात् तल्लाभ इति प्रकारत्रयसाधारणं सामान्यलक्षणं बोध्यं इति प्रहर्षणं

इष्यमाणविरोधोयोर्थस्तत्संप्राप्तिर्विषादनमलंकारः उद्योजयेत् उद्दीप्तंकुर्यात् उद्योजयेद्यावदित्यनेनतदिच्छामात्रंनतुतत्करण
मितिविषमाद्भेदः एवमग्रिमोदाहरणेपीच्छामात्रंनात्विष्टोत्पत्त्यनुकूलाचरणमिति इतिविषादनं एकस्येति एकस्यगुणदोषाभ्याम

इष्यमाणविरुद्धार्थसंप्राप्तिस्तुविषादनं दीपमुद्योजयेद्यावन्निर्वाणस्तावदेवसः यथावा रात्रिर्गमिष्य
तिभविष्यतिसुप्रभातंभास्वानुदेष्यतिहसिष्यतिपंकजश्रीः इत्थंविचिंतयतिकोशगतेद्विरेफेहाहंत
हंतनलिनींगजउज्जहार एकस्यगुणदोषाभ्यामुल्लासोन्यस्यतौयदि अपिमांपावयेत्साध्वीस्नात्वेती
च्छतिजान्हवी काठिन्यंकुचयोःस्रष्टुंवांछत्यःपादपद्मयोः निंदंतिचविधातारंत्वद्धाटीष्वरियोषितः त
द्भाग्यंधनस्यैवयन्नाश्रयतिसज्जनं लाभोयमेवभूपालसेवकानांनचेद्वधः यत्रकस्यचिद्गुणेनान्य
स्यगुणोदोषेणदोषोगुणेनदोषोदोषेणगुणोवावर्ण्यतेसउल्लासः

न्यस्यतौगुणदोषौयदिभवतस्तदोल्लासालंकारः अपी
ति आपिसंभावनायां साध्वीपतिव्रतास्नात्वामांपावयेदितिजान्हवीइच्छतीत्यन्वयः त्वद्धाटीषुयुद्धयात्रासुकुचयोःस्रष्टुंकाठिन्यंपादप
द्मयोर्वांछंत्योरियोषितः विधातारंनिंदंतीत्यन्वयः स्रष्टुमितिपाठेकुचयोःकाठिन्यंपादयोःस्रष्टुमिछंत्यइत्यन्वयः लाभोयमिति भूपा
लसेवकानामयमेवलाभोयद्वधोनभवतीत्यन्वयः

यद्दयमिति रथस्यसंक्षोभाच्चलनाद्धदयमसौसेनार्थाद्दयितायानिपीडितःसंघृष्टःममांगेषुमध्येसएवैकःकृतीकुशलः अवशिष्टमंगंभूमेर्भा



द्वितीयार्द्धमाघस्योदाहरणं तत्रपतिव्रतामहिमगुणेननदीयस्नानतोगंगायाःपावनत्वगुणोवर्णितः द्वितीयश्लोके द्वितीयस्योदाहरणं तत्रराज्ञोधाटीषुवनेपलायमानानामरातियोषितांपादयोर्धावनपरिपंथिमार्दवदोषेणतयोःकाठिन्यमस्पृष्ट्वाव्यर्थंकुचयोस्तत्स्पृष्टवतोधातुर्निंद्यत्वदोषोवर्णितः तृतीयश्लोकस्तृतीयचतुर्थयोरुदाहरणं तत्रसज्जनमहिमगुणेनधनस्यतदनाश्रयणंदोषत्वेनराज्ञःक्रौर्यदोषेणतत्सेवकानांवधंविनाविनिर्गमनंगुणत्वेनवर्णितं अनेनैवक्रमेणोदाहरणांतराणि यद्दयंरथसंक्षोभादसेनांसोनिपीडितः एकःकृतीमदंगेषुशेषमंगंभुवोभरः अत्रनायिकासौंदर्यगुणेनतदंसनिपीडितस्यस्वांसम्यक्कृतित्वगुणोवर्णितः लोकानंदनचंदनद्रुमसखेनास्मिन्वनेस्थीयतांदुर्वंशैःपरुषैरसारहृदयैराक्रांतमेतद्वनं तेह्यन्योन्यनिघर्षजातदहनज्वालावलीसंकुलानस्वान्येवकुलानिकेवलमिदंसर्वंदहेयुर्वनं अत्रवेणूनांपरस्परसंघर्षसंजातदहनसंकुलत्वदोषेणवननाशरूपदोषोवर्णितः रमित्यर्थः

दुर्वंशैर्दुष्टवेणुभिःदुष्कुलैश्चेत्यादिःश्लेषोबोध्यः वनंनाशरूपःवनसंबंधीनाशरूपःवनस्येतियुक्ततरःपाठः तत्प्रतिक्षेपोभ्रमरनिरासःगजस्यदोषत्वेनेतिसंबंधः

आघ्रातमिति मुहुःपरिलीढं आस्वादितं नीरसेनमनसाकरणभूतेनंवानरेण कर्त्रा तत्रतस्मिन्सति विचारणव्यसनिना विचारणतत्परे
ण अत्रमनापापर्णेन प्रथमचतुर्थयोःगुणेनगुणोदोषेणवागुणइतिभेदयोःउल्लासः उल्लासशब्दःअन्वर्थइति उत्कृष्टोल्लासःसुखंयत्रेत्य

दानार्थिनोमधुकरायदिकर्णतालैर्दूरीकृताःकरिवरेणमदांधबुध्या तस्यैवगंडयुगमंडनहानिरेषाभृंगाःपुनर्वि
कचपद्मवनेचरंति अत्रभ्रमराणामलंकरणत्वगुणेनगजस्यतत्प्रतिक्षेपोदोषत्वेनवर्णितः आघ्रातंपरि
चुंबितंपरिमुहुर्लीढंपुनश्चर्वितंत्यक्तंवाभुविनीरसेनमनसातत्रव्यथांमाकृताः हेसद्रत्नतवैवदेवकुशलं
यद्वानरेणादरादंतःसारविलोकनव्यसनिनाचूर्णीकृतंनाश्मना अत्रवानरस्यचापलदोषेणरत्नस्यचूर्ण
नाभावोगुणत्वेनवर्णितः अत्रप्रथमचतुर्थयोरुल्लासोन्वर्थः मध्यमयोश्छत्रिन्यायेनलाक्षणिकः
ताभ्यांतोयदिनस्यातामवज्ञालंकृतिस्तसा स्वल्पमेवांबुलभतेप्रस्थंप्राप्यापिसागरं मीलतियदिपद्मा
निकाहानिरमृतद्युतेः ताभ्यांगुणदोषाभ्यांतौगुणदोषौ र्थानुगतइत्यर्थः छत्रिन्यायेनेति केषुचिच्छत्रसंबंधा
च्छत्र्यच्छत्रिसमुदायेछत्रिणोयांतीतिवदित्यर्थः इत्युल्लासः प्रस्थं प्रस्थपरिमाणपात्रं ५ ५ ५

मदुक्तिरिति ममोक्तिः कविलास्कधियोंतःकरणंस्कधीभूयामृतीभूयञ्चेन्मदयतितोषयतितदाऽस्यामदुक्तेःअरसानांनीरसानांपुरुषा
णामनादरसमूहैःकिंनामस्यान्नकिंचिदित्यर्थः क्वचिदलसेतिपाठःपरमरमणीयापि केव रमणीस्त्रीयूनस्तरुणस्ययथांतःक

अत्रकस्यचिद्गुणेनान्यस्यगुणालाभेद्वितीयार्धमुदाहरणं दोषेणदोषस्याप्राप्तौतृतीयार्धं यथा मदुक्तिश्चेदंतर्मदयति
सुधीभूयस्कधियःकिमस्यानामस्यादलसपुरुषानादरभरैः यथायूनस्तद्वत्परमरमणीयापिरमणीकुमाराणामंतःकरण
हरणंनैवकुरुते त्वंचेत्संचरसेवृषेणलघुताकानामदिग्दंतिनांव्यालैःकंकणभूषणानिकुरुषेहानिर्नहेम्नामपि मूर्द्धन्यं
कुरुषेसितांशुमयशःकिन्नामलोकत्रयीदीपस्यांबुजबांधवस्य जगतामीशोसिकिंब्रूमहे अत्राद्येकविलारमणीगुणाभ्या
मलसबालकयोर्हृदयोल्लासरूपगुणाभावोवर्णितः द्वितीयेपरमेश्वरानंगीकरणदोषेण दिग्गजादीनांलघुतादिदोषा
भावोवर्णितः दोषस्याभ्यर्थनानुज्ञातत्रैवगुणदर्शनात् विपदःसंतुनःशश्वद्यासुसंकीर्त्यतेहरिः रणहरणंकुरुतेतद्वत्कुमा
राणांबालानामित्यन्वयः त्वंचेदिति शिवंप्रतिकस्यापिकवेरुक्तिः जलांशुंचंद्रं पक्षेजडांशुं अंबुजबांधवःसूर्यः उल्लासरूपगुणाभावः उल्ला
सरूपस्यगुणस्याभावः इत्यवज्ञा दोषस्येति अभ्यर्थना इच्छा तत्रैवदोषएव अनुज्ञेतिलक्ष्य निर्देशः शश्वत् निरंतरं संकीर्त्यतइत्यनेनान्वयि

मय्येवेति जीर्णतां प्रत्युपकाराक्षमतां हरिशब्दो वानरार्थः व्यतिरेकमुखेति वैधर्म्यमुखेत्यर्थः अस्य चार्थांतरन्यासेनेत्यनेनान्वयः दर्शितेति वैधर्म्याविपर्यये प्रत्युपकारानभिलाषी विपत्तिं नाकांक्षतीत्यर्थपर्यवसानादितिभावः व्रजेमेति हे प्रमथनाथहर पैशाचिकीं

यथावा मय्येवजीर्णतां यातु यत्त्वयोपकृतं हरे नरः प्रत्युपकारार्थी विपत्तिमभिकांक्षति इयं हनुमंतं प्रति राघवस्योक्तिः अत्र प्रत्युपकाराभावादोषस्तदभ्युपगमेहेतुर्गुणो विपत्त्याकांक्षाया अप्रसक्तिः साच व्यतिरेकमुखप्रवृत्तेन सामान्येन विशेषसमर्थनरूपेणार्थांतरन्यासेन दर्शिता यथावा व्रजेम भवदंतिकं प्रकृतिमेत्य पैशाचिकीं किमित्यमरसंपदः प्रमथनाथ नाथामहे भवद्भवनदेहलीविकटतुंडदंडाहतिस्रुटन्मुकुटकोटिभिर्मघवदादिभिर्भूयते

शाचसंबंधिनीं प्रकृतिं पिशाचतामित्यप्राप्य भवतीतिकं समीपदेशं भजेम अमरसंपत्तीः किमिति प्रार्थयामहे यतो नभवदादिभिरिंद्रप्रमुखैरपि भवद्भवनदेहलीषु विकटतुंडस्य वक्रतुंडस्य दंडाघातैः स्फुटन्मुकुटाग्रैर्भूयत इत्यर्थः इत्यनुज्ञा ५, ६, ७

लेशइति लक्ष्यनिर्देशः प्रवसतीतिसातिसप्तम्यंतं शुकस्यनिंदायाः निंदाव्याजेनस्तुतौचेत्यन्वयः संतइति सच्चरितस्योदयोवृद्धि

लेशः स्याद्दोषगुणयोर्गुणदोषत्वकल्पनं अखिलेषुविहंगेषुहंतस्वछंदचारिषु शुकपंजरबंधस्तेमधुराणांगिरांफ
लं दोषस्यगुणत्वकल्पनंगुणस्यदोषत्वकल्पनंचलेशः उदाहरणं राज्ञोऽभिमतेविदुषिपुत्रेचिरंराजधान्यांप्रवस
तितद्दर्शनोत्कंठितस्यगृहेस्थितस्यपितुर्वचनंअप्रस्तुतप्रशंसारूपं तत्रप्रथमार्द्धे इतरविहंगानामवरुद्धत्वदोष
स्यस्वछंदचरणानुकूलतयागुणत्वंकल्पितं द्वितीयार्धेमधुरभाषित्वस्यगुणस्यपंजरबंधहेतुतयादोषत्वंक
ल्पितं नचात्रव्याजस्तुतिरिति शंकनीया नह्यत्रविहंगांतराणांस्तुतिव्याजेननिंदायांशुकस्यनिंदाव्याजेनस्तुतौ
चतात्पर्यं किंतुपुत्रदर्शनोत्कंठितस्यदोषगुणयोर्गुणदोषत्वाभिमानएवात्रश्लोकेनिबद्धः यथावा संतःसच्च
रितोदयव्यसनिनः प्रादुर्भवद्यंत्रणाः सर्वत्रैवजनापवादचकिताजीवंतिदुःखंसदा अव्युत्पन्नमतिःकृतेननसता
नैवासताव्याकुलोयुक्तायुक्तविवेकशून्यहृदयोधन्योजनःप्राकृतः तद्व्यसनिनस्तत्पराः प्रादुर्भवद्यंत्रणंस्वेछाचरणनिरोधो
येषांते सर्वत्रैवविषये दुःखमितिक्रियाविशेषणं अव्युत्पन्नमतिः अनिपुणमतिः सतासमीचीनेनकृतेनाचरणेनप्राकृतोनीचः

युवेषइति वरार्थिनींकन्यकांप्रतिसखीवचनं चपलइत्यादिचनायिकायाः सखीप्रति उत्सेकइतिपाठेप्युत्कर्षएवार्थः कन्य

दंडीत्वत्रोदाजहार युवैषगुणवानूराजायोग्यस्तेपतिरूर्जितः रणोत्सवेमनः सक्तं यस्यका
मोत्सवादपि चपलोनिर्दयश्वासौजनः किंतेनमेसखि आगःप्रमार्जनायैवचाटवोयेनशि
क्षिताः अत्राद्यश्लोकेराज्ञोवीर्योत्कर्षस्तुतिः कन्यायानिरंतरसंभोगनिर्विवित्सोर्दोषत्वेन
प्रतिभासतामित्यभिप्रेत्यविदग्धयासख्याराजप्रकोपपरिजिहीर्षयासएवदोषोगुणत्वे
नवर्णितः उत्तरश्लोकेसखीभिरुपदिष्टमानंकर्तुमशक्तयापितदग्रतोमानपरिग्रहानु
गुण्यंप्रतिज्ञायतदनिर्वाहमाशंकमानयासखीनामुपहासंपरिजिहीर्षया नायिकयानाय
कस्यचाटुकारितागुणएवदोषत्वेनवर्णितः नचाद्यश्लोकेस्तुतिर्निंदापर्यवसायिनीद्वितीयश्लोके निंदास्तुतिपर्यवसायिनीतिव्याजस्तुतिराशंकनीया

यादोषत्वेनभासतामित्यन्वयः निर्वे
र्तुमिच्छानिर्विवर्त्तिषातद्रूपदोषत्वेनेत्यर्थः निर्विवित्सोरितिपाठेराज्ञोविशेषणं कुतस्तर्हिगुणत्वेनवर्णनंतत्राह ७

राजप्रकोपेति अन्येनाविदितं यथा स्यादिति क्रियाविशेषणं लेशत एवेति तदुक्तं दंडिनैव लेशमेके विदुर्निंदां स्तुतिं वा लेशतः कृता मिति लेशमात्रस्येति कृत्स्नार्थकं उदाहरणयोः आखिलेष्वित्याद्योः भिन्नविषयेति अन्यनिंदयान्यस्य स्तुतिरन्यस्तुत्यान्यनिंदेत्येवमा

राजप्रकोपादिपरिहारार्थमिह निंदास्तुत्योरन्याविदिततया लेशत एवोद्घाटनेन तयोर्विशेषादिति वस्तुतस्त्विह व्याजस्तुतिसद्भावेपि न दोषः नह्येतावता लेशमात्रस्य व्याजस्तुत्यंतर्भावः प्रसज्जते तदसंकीर्णयोरपि लेशोदाहरणयोर्दर्शितत्वात् नापि व्याजस्तुतिमात्रस्य लेशांतर्भावः प्रसज्जते भिन्नविषयव्याजस्तुत्युदाहरणेषु कस्त्वं वानर राम चंद्रभवने लेखार्थसंवाहको यद्दृष्टं मुहुरीक्षसे न धनिनां ब्रूषे न चाटून्मृषा इत्यादिषु दोषगुणीकरणस्य गुणदोषीकरणस्य चाभावात् तत्रान्यगुणदोषाभ्यामन्यत्र गुणदोषयोः प्रतीतेः

दिरूपेत्यर्थः ननु तथाप्येकविषया व्याजस्तुतिर्न लेशाद्भिद्येतेत्याशंक्याह १ ४, ७, ७.

विषयैक्येपीति लेशास्पर्शनादित्यग्रेतनेनान्वयः इंदोरिति हेउर्वीवलयतिलकरूप राजन् त्वदीयैर्यशोभिः किंधवलितमद्भुद
यतोऽद्यापिइंदुलक्ष्मादीनि श्यामलिम्नाश्यामवर्णेनानुलिप्तान्याभासंते इत्यन्वयः लक्ष्मलांछनं दिङ्नागानां दिग्गजानां मदजल

विषयैक्येपि इंदोर्लक्ष्मत्रिपुरजयिनः कंठमूलंमुरारिर्दिङ्नागानांमदजलमषीभांजिगंडस्थला
नि अद्याप्युर्वीवलयतिलकश्यामलिम्नानुलिप्तान्याभासंतेवदधवलितं किंयशोभिस्त्वदीये
रित्याद्युदाहरणेषुलेशास्पर्शनात् तत्रहींदुलक्ष्मादीनांधवलीकरणाभावदोषएवगुणत्वे
ननपर्यवस्यति किंतुपरिसंख्यारूपेण ततोन्यत्सर्वंधवलितमित्यन्योगुणः प्रतीयते
क्वचिद्व्याजस्तुत्युदाहरणेगुणदोषीकरणसत्वेपिस्फुटोविषयांतरमपिदृश्यते

मेवमषीतद्भांजितत्कृतानि परिसंख्येति एतान्येवश्यामानीत्येवंरूपेत्यर्थः विषयांतरं दोषीकृताद्भिन्नंगुणरूपमालंबनं

सर्वदेति अरयः पृष्ठमर्थान्नवनलेभिरेत्रामवंतः पलायनाभावात् दीनाः परिमाणविशेषपरिच्छिन्नाक्षरवर्णमुद्रा एवंचलेशव्याज
स्तुत्योरसंकीर्णविषयसत्वेच गुणदोषीकरणादिकमित्यादिपदेनदोषगुणीकरणसंग्रहः थेष्वित्युपक्रमात्तत्रेति पाठो युक्तःनरः अत्रेन्यपि

यथा सर्वदासर्वदोसीतिमिथ्यासंस्तूयतेबुधैः नारयोलेभिरेपृष्ठंनवक्षःपरयोषितः अत्रहिवाच्ययानिंदया
परिसंख्यारूपेण ततोन्यत्सर्वमर्थिनामभिमतंदीनारादिदीयते इतिस्तुत्यंतरमपिप्रतीयते एवंचयेषुउदाह
रणेषुकस्तेशौर्यमदोयोद्धुमित्यादिषुगुणदोषादिषुगुणदोषीकरणादिकमेवव्याजस्तुतिरूपतयावतिष्ठ
ते तत्रलेशव्याजस्तुत्योःसंकरोस्तु इत्थमेवहिव्याजस्तुत्यप्रस्तुतप्रशंसयोरपिप्राक्संकरोवर्णितः
सूच्यार्थसूचनंमुद्राप्रकृतार्थपरैःपदैः नितंबगुर्वीतरुणीदृग्युग्मविपुलाचसा अत्रनायिकावर्णनप
रेणयुग्मविपुलापदेनास्यानुष्टुभोयुग्मविपुलानामत्वरूपसूच्यार्थसूचनंमुद्रा

युक्तएव इदमपियच्छब्दार्थपरामर्शकत्वात् इतिलेशः सूच्यार्थेति सूचनीयस्यार्थस्येत्यर्थःमुद्रेतिलक्ष्यनिर्देशः दृग्युग्मं
विपुलंयस्याःसा ७ ७

अत्र ग्रंथे अस्मिन्नलंकारग्रंथे रत्नमालाशब्देन भगवत्स्तुतिपद्यावलीविशेष उच्यते रत्ननामनिवेशेन प्रकृतार्थपररत्नवाचिपदघटनेन तत्तन्नामकजातिसूचनं तन्नामप्रवृत्तिनिमित्तरत्नजातिसूचनं नक्षत्रमालाशब्दार्थोपि पूर्वोक्त एव अग्न्यादिदेवतानामभिर्नक्षत्राणां तद्देवत्या

यद्यप्यत्र ग्रंथे वृत्तनाम्नो नास्ति सूचनीयत्वं तथाप्यस्योत्तरार्धस्य लक्ष्यलक्षणयुक्तछंदः शास्त्रमध्यपातित्वेन तस्य सूचनीयत्वमस्तीति तदभिप्रायेण लक्षणं योज्यं एवं नवरत्नमालायां तत्तद्रत्ननामनिवेशेन तत्तन्नामकजातिसूचनं नक्षत्रमालायामग्न्यादिदेवतानामभिर्नक्षत्रसूचनमित्यादावयमेवालंकारः एवं नाटके वक्ष्यमाणार्थसूचनेप्यपि क्रमिकं प्राकृतार्थानोन्यासं रत्नावलीं विदुः चतुरास्यः पतिर्लक्ष्म्याः सर्वज्ञस्त्वं महीपते अत्र चतुरास्यादिपदैर्वर्णनीयस्य ब्रह्मविष्णुरुद्रात्मता प्रतीयत इति प्रसिद्धसहपाठानां क्रमेण निवेशनं रत्नावली

नां सूचनं बोध्यं वक्ष्यमाणेति यथा अनर्घ्यराघवे यानेन्यायप्रवृत्तस्यातिर्यचोपि सहायतां अपंथानं तु गच्छंतं सोदरोपि विमुंचतीति सूत्रधारवचनेन वक्ष्यमाणरावणभ्रातृसूचनमिति बोध्यं इति मुद्रा क्रमिकमिति प्रकृतार्थानां क्रमिकप्रसिद्धक्रमानुसारिन्यसनं प्रतिपादनं रत्नावलिरलंकारः प्रकृतलच्चयथाकथंचिलक्षत संबंधत्वं बोध्यं चतुरेति चतुरमास्यं यस्य सः चतुर्मुखश्च ७, ७,

रत्यासेति हे बाले भवत्याः स्तने श्रीरमणस्य विष्णोरवतारदशकं भातीत्यन्वयः कीदृशे रतावासं प्राप्तं प्रियस्य लांछनं चिन्हं नखक्षतां गरागादिकं येन तथाभूते कठिनताया आवासे स्थानभूते रसेनालिंगिते प्रकृताल्हादे एकरसे तत्परे क्रमाद्बदरामलकादिपरिमाणलाभेनोपचिते प्रवृद्धे भूभृतां पर्वतानां गुरुत्वमपहंति नाशयति तादृशे ततोपि महत्वात् चक्रवाकस्य द्वीशीले तत्सदृशत्वात् भोगः स्करवं शरीरं वा तद्भाजि जनितमदने खिबिंद्रियेषु लीना आसक्ता उन्मुखा यास्मिन् तादृशे एतैरेव विशेषणैर

यथावा रत्यासप्रियलांछने कठिनतावासे रसालिंगिते प्रल्हादैकरसे क्रमादुपचिते भूभृद्गुरुत्वापहे
कोकस्पर्द्धिनि भोगभाजि जनितानंगे खलीनोन्मुखे भाति श्रीरमणावतारदशकं बाले भवत्याः स्तने

वतारदशकरूपतापि स्तनस्य बोध्या तद्यथा रत्या प्राप्तः प्रियः कामस्तस्य लांछनं मत्स्यस्तद्रूपे कठिनताया आवासे कूर्मे रसया पृथिव्या स्वोद्धरणकाल आलिंगिते वराहे प्रल्हादे एको रसः प्रीतिर्यस्य तस्मिन्नृसिंहे क्रमः पादविक्षेपस्तदनुसारेणोपचिते प्रवृद्धे वामने भूभृतां राज्ञां गौरवनाशके भार्गवे कोकस्पर्धिनि सीतावियोगातुरतया चक्रवाकशापदे रामे भोगः फणा तद्भाजि शेषावतारे बलभद्रे जनितमनंगं अंगस्य शरीरस्य विरुद्धं मौनभोगत्यागसमाधिप्रभृति येन तस्मिन्बुद्धे खलीनमश्वस्य वल्गा तदुन्मुखे कल्किनीति

क्रमाननुसरणेपीति तथाच प्रसिद्धसहपाठानामर्थानांन्यसनं रत्नावलिरिति सामान्यलक्षणं सक्रमाक्रमत्वेनत्र भेदाविति भावः यस्येति यस्यप्रतापः निहतानां प्रतिशत्रुभूतानामंतःपुरेषु पंचमहाभूतमयो मूर्त्त इवादृश्यतेत्यन्वयः पंचमहाभूतमयत्वमेव

यथावा लीलाब्जानांनयनयुगलद्राघिमादत्तपत्रः कुंभावेभौ कुचपरिकरः पूर्वपक्षीचकार भ्रूविभ्रांतिर्मदनधनुषोविभ्रमानन्ववादीद्वक्त्रज्योत्स्नाशशधररुचं दूषयामासयस्याः अत्रपत्रदानपूर्वपक्षोपन्यासानुवाददूषणोद्भावनानि बुधजनप्रसिद्धक्रमेणन्यस्तानि प्रसिद्धसहपाठानां प्रसिद्धक्रमाननुसारेणप्ययमेवालंकारः यथावा यस्यवन्हिमयो हृदयेषु जलमयो लोचनपुटेषु मारुतमयश्च सितेषु क्षमामयोंऽगेषु आकाशमयः स्वांतेषु पंचमहाभूतमयो मूर्त्त इवादृश्यत निहतप्रतिसामंतांतःपुरेषु प्रतापः

विशेषणैर्दर्शयति वन्हिमय इत्यादि अंगेषु क्षमामयः पृथिवीमयः पीडाभरसहिष्णुत्वात् स्वांतेषु अंतःकरणेषु आकाशमयः तेषांशून्यताश्रयत्वात् ७ ७ ७ ७ ७

यथाकथंचिदित्यस्य प्रपंचनं प्रकृतोपमानेत्यादि उपमानंचोपरंजकंचोपमानोपरंजके तयोर्भावस्तत्ता प्रकृतंप्रत्युपमानता उप
रंजकताचेत्यर्थः उपरंजकताचारोप्यमाणता तदुक्तं उपरंजकतामतिविषयीरूपकंतदेति तत्रोपमानता रविरिवप्रतिदिव
सोपजायमानोदयइत्यादिवत् उपरंजकतातु चतुरास्यइत्याद्युदाहरणे वन्हिमयइत्यादिप्रतापवर्णनेचस्पष्टेति प्रक

एवमष्टलोकपालनवग्रहादीनांप्रसिद्धसहपाठानांयथाकथंचित्प्रकृतोपमानोपरंजकतादिप्रकारेणनिवेशनेरत्नावल्यलंकारः प्रकृतान्वयंविनाक्रमिकतत्तन्नाम्नाश्लेषभंग्यानिवेशनेक्रमप्रसिद्धरहितानांप्रसिद्धसहपाठानांनवरत्नादीनांनिवेशनेप्ययमेवालंकारः

तान्वयंविनेति मित्रचंद्रमुखीबालालोहिताधरपल्लवेत्यादावितिभावः क्रमिकेत्यपलक्षणं तदभावेपि गुरुणाजघनेनैषातरुणीमंदगामिनीत्यादावप्ययमलंकारइतिबोध्यं इतिरत्नावली ७ ७

तद्गुणइति स्वगुणत्यागादनंतरं अन्यदीयगुणग्रहणं तद्गुणालंकारः पद्मेति तवनासामौक्तिकमधरकांत्यापद्मराग वदाचरतीत्यर्थः वीरेति हेवीरत्वदरिकामिनीवनभुविपरिधानंकर्तुंपल्लवानिकरेणसंस्पृश्यपांडुपत्रबुध्यानहरतिनगृ ण्हाति कीदृशानि निजकररुहाणांनखानांरुच्याश्वेतकांत्यारवचितानिव्याप्तानीत्यर्थः इतितद्गुणः पुनरिति स्वगुण

तद्गुणःस्वगुणत्यागादन्यदीयगुणग्रहः पद्मरागायतेनासामौक्तिकंतेऽधरत्विषा यथावा वीरत्व
द्रिपुरमणीपरिधातुंपल्लवानिसंस्पृश्य नहरतिवनभुविनिजकररुहरुचिरवचितानिपांडुपत्रधिया
पुनःस्वगुणसंप्राप्तिःपूर्वरूपमुदाहृतं हरकंठांशुलिप्तोपिशेषस्त्वद्यशसासितः यथावा विभिन्नव
र्णागरुडाग्रजेनसूर्यस्यरथ्याःपरितःस्फुरंत्या रत्नैःपुनर्यत्ररुचारुचंस्वामानिन्यिरेवंशकरीरनीलैः

त्यागानंतरंपुनःस्वगुणप्राप्तिःपूर्वरूपमलंकारः हरेति नीलोपीलितियुक्तःपाठःविभिन्नेति माघेरैवकगिरिवर्णनं गरुडाग्रजे नारुणेनविभिन्नवर्णामिश्रितवर्णाः सूर्यस्यरथ्याअश्वायत्रगिरौवंशांकुरवन्नीलैरत्नैःपरितःस्फुरंत्यारुचास्वांरुचंनीलद्युतिं आनिन्यिरे आनीतवंतः रुचाविभिन्नवर्णा इतिनान्वयः १ १ १

केचिदित्यस्वर नर्वीजं तु पद्मरागाय तद्दृष्टदाहरणे तद्गुणालंकारो न स्यात् न चेष्टापत्तिः अनुभवसिद्धचमत्कारस्य निरालंबनत्वापत्ते रित्यूहनीयं अथवा यत्तद्गुण एवेत्येवकारक्रमभंगेन काव्यप्रकाशकारादिमतोपन्यासपरत्वेन व्याख्येयं तैरत्र तद्गुणस्योदाहृतत्वात् अत्र हि पूर्वमश्वानामरुणगुणत्वं अनंतरं रैवतकरत्नैरुभयेषां तद्गुणत्वमिति तद्गुणद्वयमिति तेषामभिमतं पूर्वेति वस्तुनि विकृते विगतेसत्यपि पूर्वावस्थाया अनुवृत्तिरपि पूर्वरूपमलंकारः महः प्रकाशः द्वारमिति हे राजन् नवविद्विषां मंदिरे शून्येपि चिरंतनः

अयमेव तद्गुण इति केचिद्यवज्जगुः पूर्वावस्थानुवृत्तिश्च विकृते सति वस्तुनि दीपे निर्वापिते प्यासीत्कांचीरत्नैर्महन्महः लक्षणे च कारात्पूर्वरूपमिति लक्ष्यवाक्यपदानुवृत्तिः यथा वा द्वारं खड्गिभिरावृतं बहिरपि प्रस्विन्नगंडैर्गजै रंतः कंचुकिभिः स्फुरन्मणिधरैरध्यासिता भूमयः आक्रांतं महिषीभिरेव शयनं तद्विद्विषां मंदिरे राजन्सैव चिरंतनप्रणयिनी शून्येपि राज्यस्थितिः

प्रणयिन्यस्याः सैव राज्यस्य स्थितिर्मर्यादास्तीति शेषः यतो द्वारं खड्गिभिर्गंडकाख्यपशुभिरेव खड्गधारिभिरावृतं बहिरपि भूमयः मदप्रस्विन्नगंडैर्गजैरध्यासिताः अंतःपुरभूमयः विलसन्मणिधारिभिः कंचुकिभिः सर्पैरेव सौविदल्लैरध्यासिताः शयनं तल्पं महिषीभिर्वनिताभिरेव महिषस्त्रीभिराक्रांतमित्यन्वयः इति पूर्वरूपं ७ ७ ७

संगतेति. संगतः स्वसंबद्धोयोन्यः पदार्थस्तद्गुणानंगीकारमतद्गुणालंकारमाहुः चिरमिति रागिणि अनुरागिणि मंजिष्ठादिरंजनद्रव्ययुक्ते च निहितोपि त्वं न रज्जासि रक्तो नुरागश्च न भवसीति श्लिष्टं गंडेति हे श्रीमन्नृसिंहाख्यभूपते एषा तव कीर्त्तिः मंदैः पिच्छलेपं किले दिग्ग

संगतान्यगुणानंगीकारमाहुरतद्गुणं चिरं रागिणि मच्चित्ते निहितोपि न रज्जसि यथा वा गंडाभोगे विहरति मदैः पिच्छले दिग्गजानां वैरिस्त्रीणां नयनकमलेष्वंजनानि प्रमार्ष्टि यद्यप्येषा हिमकरकराद्वैत सौवस्तिकी ते कीर्त्तिर्दिक्षु स्फुरति तदपि श्रीनृसिंहक्षितींद्र ननु चान्यगुणेनान्यत्र गुणोदयानुदयरूपाभ्यामुल्लासावज्ञालंकाराभ्यां तद्गुणातद्गुणयोः को भेदः उच्यते उल्लासावज्ञालक्षणयोर्गुणशब्दो दोषप्रतिपक्षवाची अन्यगुणेनान्यत्र गुणोदयतदनुदयो च न तस्यैव गुणस्य संक्रमणासंक्रमणे किंतु सहरूपदेशेन सदसच्छिष्ययोर्ज्ञानोत्पत्त्यनुत्पत्तिवत्तद्गुणजन्यत्वेन संभावितयोर्गुणांतरयोरुत्पत्त्यनुत्पत्ती तद्गुणातद्गुणयोः पुनर्गुणशब्दो रूपरसगंधादिगुणवाची

जानां गंडप्रदेशे यद्यपि विहरति तथा वैरिस्त्रीणां नयनकमलेषु स्थितान्यंजनानि प्रमार्ष्टि प्रोंछति तदपि तथापि दिक्षु हिमकरस्य चंद्रस्य यत् किरणाद्वैतं तस्य सौवस्तिकी स्वस्तीत्याह इत्यर्थे तदाहेति मा शब्दादिभ्यष्ठग्वाच्य इत्यनेन ठक् प्रत्ययः तत्सदृशीति यावत् स्फुरति प्रकाशत इत्यर्थः

कुवल० ३४१

विशेषाकारेणेति प्राक्लक्षितविशेषरूपेणेत्यर्थः इत्यतद्गुणः भागिति परसंनिधिवशात्पूर्वसिद्धस्यस्वगुणस्योत्कर्षः अनुगु

तत्रान्यदीयगुणग्रहणाग्रहणेचरक्तस्फटिकवस्त्रमालिन्यादिन्यायेनान्यदीयगुणेनैवानुरंजनाननुरंजनेविवक्षिते तथैवचोदाहरणानिदर्शितानि यद्यप्यवज्ञालंकृतिरतद्गुणश्च विशेषोक्तिविशेषावेव कार्याजनिर्विशेषोक्तिःसतिपुष्कलकारणेइतितत्सामान्यलक्षणाक्रांतत्वात् तथाप्युल्लासतद्गुणप्रतिद्वंद्विनाविशेषाकारेणालंकारांतरतयापरिगणितावितिध्येयं प्राक्सिद्धस्वगुणोत्कर्षोऽनुगुणःपरसन्निधेः नीलोत्पलानिदधतेकटाक्षैरतिनीलतां कपि रश्मिकापिशायनमदमत्तोद्दृश्चिकेनसंदष्टः अपिचपिशाचग्रस्तःकिंब्रूमोवैकृतंतस्य अत्रकपित्वजात्यास्वतःसिद्धस्यवैकृतस्यमद्यादिभिरुत्कर्षः

गौनामालंकारः नीलोत्पलानि कर्णावतंसीकृतानि कापिशिनि कापिशायनंमद्यं इत्यनुगुणः १ १ १९

मीलितमितिलक्ष्यनिर्देशः रसइति स्वभावलोहितेचरणे लाक्षायारसो नालक्षिनज्ञातः मल्लिकेति क्षौमंदुकूलं तद्धारिण्यः इति
मीलितं सामान्यमितिलक्ष्यनिर्देशः विशेषोव्यावर्त्तकधर्मः पद्मानामाकरः रत्नस्तंभेष्विति वालिसूनुना अंगदेन एकेन चरण

मीलितंयदिसादृश्याद्भेदएवनलक्ष्यते रसोनालक्षिलाक्षायाश्चरणेसहजारुणे यथावा मल्लि
कामाल्यभारिण्यः सर्वांगीणार्द्रचंदनाः क्षौमवत्योनलक्ष्यंतेज्योत्स्नायामभिसारिकाः अत्राद्येचरणा
लक्तकरसयोरारुणिमगुणसाम्याद्भेदानध्यवसायः द्वितीयोदाहरणेचंद्रिकाभिसारिकाणांधवलिम
गुणसाम्याद्भेदानध्यवसायः सामान्यंयदिसादृश्याद्विशेषोनोपलक्ष्यते पद्माकरप्रविष्टानांमुखंनाल
क्षिस्त्रुवां यथावा रत्नस्तंभेषुसंक्रांतैःप्रतिबिंबशतैर्वृतः लंकेश्वरःसभामध्येनज्ञातोवालिसूनु
ना मीलितालंकारेएकेनापरस्यभिन्नस्वरूपानवभासरूपंमीलनंक्रीयते सामान्यालंकारेतुभि
न्नस्वरूपावभासेपिव्यावर्तकविशेषोनोपलक्ष्यतइतिभेदः

ज्योत्स्नादिना अपरस्यलाक्षारसाऽभिसारिकादेः भिन्नरूपेति मुखपद्मादेर्भिन्नस्यस्वरूपस्यावभासेपीत्यर्थः ७ ७

पूर्वस्मिन्निति मीलितं यदि सादृश्यादित्यादिपूर्वोक्तचंद्रालोककृन्मतइत्यर्थः स्वरूपतिरोधाने अपांगतरलइत्यादिस्वरूपति
रोधानस्थले अलंकारांतरेणेत्यादि स्वरूपतोज्ञायमाने सादृश्याद्भेदाग्रहणं मीलितमित्यंगीकारेप्रथमःपक्षः सादृश्यद्भेदा
ग्रहणमित्येतावन्मात्रमीलितलक्षणांगीकारेणद्वितीय इतिभावः इतिसामान्यं भेदेति वैशिष्ट्यंवैजात्यं उन्मीलितंविशेषकश्चक्र

पूर्वस्मिन्मते स्वरूपतिरोधाने लंकारांतरेण भाव्यं मीलितावांतरभेदेनवा भेदवैशिष्ट्ययोःस्फूर्त्तौ तुन्मी
लितविशेषकौ हिमाद्रिंत्वद्यशोमग्नंस्फुराःशीतेनजानते लक्षितान्युदितेचंद्रेपद्मानिचमुखानिच
मीलितन्यायेन भेदानध्यवसाये प्राप्ते कुपितोपिहेतो भेदस्फुर्तौ मीलितप्रतिद्वंद्वि मीलितं तथासामा
न्यरीत्याविशेषास्फुरणे प्राप्ते कुतश्चित्कारणात् विशेषस्फूर्त्तौ तत्प्रतिद्वंद्वी विशेषकः

मेणालंकारौ मग्नं भेदाग्र
हान्तर्दं तर्गतं लक्षितानीति संकुचितत्वादितिभाव सामान्यरीत्या सामान्यालंकारन्यायेन एवंच वेनत्वचातुल्यरुचांवधूनांक
र्णाग्रतोगंडतलागतानि भृंगाः सहेलंयदिनापतिष्यन्कोवेदयिष्यन्नवचंपकानीत्यपिविशेषकोदाहरणंबोध्यं ७, ७

यत्त्वनुमानालंकारेणैव गतार्थत्वान्नानयोरलंकारांतरत्वमिति तदयुक्तं उदाहृतस्थले भेदविशेषस्फूर्त्यौ विशेषदर्शनहेतुकप्रत्यक्षरूपत्वात् अथापि स्वकपोलकल्पितपरिभाषयाऽनुमानालंकारतां ब्रूषे तथापि सादृश्यमहिम्नाऽऽगनवगतयोर्भेदवैजात्ययोः स्फुरणात्मना विशेषाकारेण मीलितसामान्यप्रतिद्वंद्विना युक्तमेवालंकारांतरत्वं अतद्गुणावज्ञयोरिव विशेषोक्त्यलंकारादित्यलं विस्तरेण

क्रमेणोदाहरणद्वयं तद्गुणरीत्यापि भेदानध्यवसायप्राप्तावुन्मीलितं दृश्यते यथा नृत्यद्भर्गाट्टहासप्रचरसहचरैस्तावकीनैर्यशोभिर्धावल्यंनीयमाने त्रिजगति परितः श्रीनृसिंहक्षितींद्र नेदृग्घ्येषनाभीकमलपरिमलप्रौढिमासादयिष्यद्देवानां नाभविष्यत्कथमपि कमलाकामुकस्यावबोधः काकः कृष्णः पिकः कृष्णः को भेदः पिककाकयोः वसंतसमये प्राप्ते काकः काकः पिकः पिकः इदं विशेषकस्योदाहरणं अत्र द्वितीयकाकपिकशब्दौ काकत्वेन ज्ञातः पिकत्वेन ज्ञात इत्यर्थांतरसंक्रमितवाच्यौ

नृत्यदिति नृत्यं कुर्वतो भर्गस्य हरस्य योऽट्टहासस्तत्प्रसरस्य समूहस्य विस्तारस्य वा सहचरैः सदृशैरित्यर्थः ईदृक्कीर्तिवल्लुकः ग्ध कमलाकामुकः नाभीकमलपरिमलस्य प्रौढिं समृद्धिं यदि नासादयिष्यत् नाधारयिष्यदित्यन्वयः ७ ७

यत्तु तद्गुणस्यात्र निर्बाधत्वात्कथं तत्त्वानिह्नुहितत्वमुन्मीलितस्येति तदनुक्तोपालंभरूपत्वादुपेक्ष्यं तद्गुणेन भेदानध्यवसायमात्रस्यो क्तत्वात् वाराणसीति तृतीयलोचनादिचिन्हे साधारणेपि सतीत्यन्वयः पार्थोर्जुनस्तेन कृतो यः प्रहारस्तेन व्रणो यत्र तादृशामुत्त

यथावा वाराणसीवासवतां जनानां साधारणे शंकरलांछनेपि पार्थप्रहारव्रणमुत्तमां
गं प्राचीनमीशं प्रकटीकरोति किंचिदाकूतसहितं स्याद्गूढोत्तरमुत्तरं यत्रासौ वेत
सीपांथ तत्रेयं स्फुतरा सरित् सरित्तरणमार्गं पृष्टं तं प्रति तं कामयमानायाउत्तरमि
दं वेतसीकुंजे स्वाछंद्यमित्याकूतगर्भं

मांगंशिरः पूर्वत्र स्वाभाविकगुणसाम्यं इह त्वागंतुकगुणसाम्यमिति भेदः इत्युन्मीलितविशेषकौ किंचिदिति किंचि दभिप्रायसहितं गूढमुत्तरं उत्तरं नामालंकारः वेतसी वेतसलता सुखेन तरितुं योग्या स्फुतरा ७ ७

ग्रामइति प्रस्तरप्रायेपाषाणबहुले पाषणतुल्येच प्रायोबाहुल्यतन्ययोरितिकोशात् किंचिदास्तरणादिकं समागमप्रति बंधकंच

अथवा ग्रामेस्मिन्प्रस्तरप्रायेनकिंचिस्रोर्थविद्यतेपयोधरोन्नतिं दृष्ट्वा वस्तुमिच्छसिचेत्तर्हि स आस्तरणादिकमर्थयमा नंपांथंप्रत्युक्तिरियं स्तनोन्नतिं दृष्ट्वा रंतुमिच्छसिचेत्तर्हि स अविदग्धजनप्रायेऽस्मिन्ग्रामेकश्चिदवगमिष्यतीत्येता दृशंप्रतिबंधकंकिंचिदपिनास्तीतिहृदयं इदमुन्नेयप्रश्नोदाहरणं निबद्धप्रश्नोत्तरंयथा कुशलंतस्याजीवतिकु शलंपृच्छामिजीवतीत्युक्तं पुनरपितदेवकथयसिमृतांनुकथयामियाश्वसितिति ईर्ष्यामानानंतरमनुतप्तायानायि कायाःसखीमागतांप्रतितस्याःकुशलमितिनायकस्यप्रश्नः जीवतीतिसख्याउत्तरं जीवत्याःकुतःकुशलमितितदभि प्रायः अन्यत्पृष्टमन्यदुत्तरमितिनायकस्यपुनःकुशलंपृच्छामीतिप्रश्नः पृष्टस्योत्तरमुक्तमित्यभिप्रायेणजीवती त्युक्तमितिसख्यावचनं सखीवचनस्याभिप्रायोद्घाटनार्थंपुनरपितदेवकथयसीतिनायकस्याक्षेपः मृतांनुकथया कथयेमित्यभिप्रायः
मियाश्वसितीतिस्वाभिप्रायोद्घाटनं सतिमरणेखलुतस्याःकुशलंभवतिमदागमनसमयेपिश्वासेषुसंचरत्सुकथंमृतां

पयोधरोमेघःस्तनश्च कश्चिदवगमिष्यतिज्ञास्यतीत्येतादृशंइत्यादिरूपं उन्नेयःकल्प्यःप्रश्नोयेनतादृशस्योत्तरस्य ईर्ष्यामानेति ईर्ष्या हेतुकमानेत्यर्थः अनुतप्तायाः पश्चात्तापयुतायाः ७

प्रश्नोत्तरेति प्रश्नश्चउत्तरांतरंच प्रश्नोत्तरांतरे ताभ्यामभिन्नमुत्तरंचित्रमित्युच्यत इत्यर्थः केदारेति केदाराणांपोषणेरताः केइतिप्रश्नः केदारस्यक्षेत्रस्यपोपणेरताइतितदेवोत्तरं केखेटाः खेआकाशे अटंतीतिप्रश्नस्ययदुत्तरंवयः पक्षिणइतितत्किंचलमितिप्रश्नस्य यदुत्तरांतरंवयस्तारुण्यादीनितेनाभिन्नं इत्युत्तरं सूक्ष्ममिति पराशयाभिज्ञस्यइतरस्मिन्परविषयेसाभिप्रायंचेष्टितंसूक्ष्मा

प्रश्नोत्तरांतराभिन्नमुत्तरंचित्रमुच्यते केदारपोषणरताः केखेटाः किंचलंवयः अत्रकेदारपोषणरता इतिप्रश्नाभिन्नमुत्तरंकेखेटाः किंचलमितिप्रश्नद्वयस्यवयइत्येकमुत्तरं उदाहरणांतराणिविदग्धमुखमंडनेद्रष्टव्यानि सूक्ष्मंपराशयाभिज्ञेतरसाकूतचेष्टितं मयिपश्यतिसाकेशैः सीमंतमणिमावृणोत् कामुकस्यावलोकनेन संकेतकालप्रश्नभावंज्ञातवत्याश्चेष्टेयं अस्तंगतेसूर्येसंकेतकालइत्याकूतं यथावा संकेतकालमनसंविटंज्ञात्वाविदग्धया आसीन्नेत्रार्पिताकूतंलीलापद्मंनिमीलितं ७

लंकारः पराशयाभिज्ञश्चासावितरश्च तस्यसाकूतचेष्टितमर्थात्परविषय इतिचार्थः संकेतेति संकेतकालेमनोयस्यतज्जिज्ञासुमितियावत् विटंजारं नेत्राभ्यामर्पितमाकूतंयस्मिन्तादृशंलीलाम्बुधिपद्मं नेत्रेत्यादिक्रियाविशेषणंवा इतिसूक्ष्मं ७

पिहितमिति लक्ष्यनिर्देशः तल्पंशायनं नक्तेति वल्केप्रस्रवणशीलानांस्वेदबिंदूनांप्रबंधैर्धाराभिःकंठेभिन्नंलग्नंकुंकुमंदृष्ट्वाकापिव यस्यासखीस्मित्वास्मितंकृत्वा पुंस्त्वंव्यंजयंतीसतीतन्व्याःपाणौखड्गलेखांलिलेखेत्यन्वयः सूक्ष्मालंकारेपराभिप्रायमवगत्यसा

पिहितंपरवृत्तांतज्ञातुःसाकूतचेष्टितं प्रियेगृहागतेप्रातःकांतातल्पमकल्पयत् रात्रौसपत्नीगृहेजागरणेनश्रांतोसीतितल्पकल्पनाकूत वल्कंस्पंदिस्वेदबिंदुप्रबंधैर्दृष्ट्वाभिन्नंकुंकुमंकापिकंठे पुंस्त्वंतन्व्याव्यंजयंतीवयस्यास्मित्वापाणौखड्गरेखांलिलेख अत्रस्वेदानुमितंपुरुषायितंपुरुषोचितखड्गलेखनेनप्रकाशितं व्याजोक्तिरन्यहेतूक्त्यायदाकारस्यगोपनं सखिपश्यगृहारामपरागैरस्मिधूसरा अत्रचौर्यरतकृतसंकेतभूपृष्ठलुंठनलग्नधूलिजालस्यगोपनं यथावा कस्यवानभवेद्रोषःप्रियायाःसव्रणेधरे सभृंगंपद्ममाघ्रासीर्वारितापिमयाधुना उपपतिनाखंडिताधरायाः नायिकायाःसकाशमागच्छंतंप्रियमपश्यंत्येवसख्यानायिकांप्रतिहितोपदेशव्याजेनतंप्रतिनायिकापराधगोपनं कृतचेष्टितेनोत्तरसमर्पणं पिहितालंकारेतुगूढंपरवृत्तांतंज्ञात्वासाकूतचेष्टयातत्प्रकाशनमितिभेदोबोध्य

इतिपिहितं व्याजोक्तिरिति लक्ष्यनिर्देशः चौर्यरतेकृतंयत्संकेतभूलभूमिपृष्ठलुंठनमित्यन्वयः उपपतिना जारेण ७

तस्यांछेकापह्नुतौ आयांतमिति प्रातोल्यां रथ्यायां एकाकाचिद्ग्रामवनिता सख्याःपुरस्तात् रोमांचकंपादिभिरनुभावैर्व्यज्यमानमनुरागंए

छेकापह्नुतेरस्याश्चायंविशेषः तस्यांवचनस्यान्यथानयनेनापह्नवः अस्यामाकारस्यहेत्वंतरवर्णनेनगोपनमिति लक्षणेलक्ष्यनाम्निचोक्तिग्रहणमाकारस्यगोपनार्थहेत्वंतरप्रत्यायकव्यापारमात्रोपलक्षणं ततश्चआयांतमालोक्यहरिंप्रतोल्यामाल्याःपुरस्तादनुरागमेका रोमांचकंपादिभिरुच्यमानंभामाजुगूहप्रणमंत्यथैनं इत्यत्रापिव्याजोक्तिरेव तत्रह्यनुरागकृतस्यरोमांचाद्याकारस्यभक्तिरूपहेत्वंतरप्रत्यायकेनप्रणामेनगोपनंकृतं सूक्ष्मपिहितालंकारयोरपिचेष्टितग्रहणमुक्तिसाधारणव्यापारमात्रोपलक्षणं ततश्चनलिनीदलेबलाकामरकतपात्रइवदृश्यतेशुक्तिः इतिममसंकेतभुविज्ञात्वाभावंतदाब्रवीदालि मित्यादिष्वपिसूक्ष्मालंकारःप्रसरति अत्रश्लोकेतावत्किमावयोःसंकेतस्थानंभविष्यतीतिप्रश्नाशयंसूचयतिकामुकेतद्भिज्ञयाविदग्धयातदासखींप्रतिसाकूतमुक्तिमिति सूक्ष्मालंकारोभवति यतोत्रबलाकायामरकतपात्रप्रतिष्ठितशुक्त्युपमयातस्यानिश्चलेनाश्वस्तत्वंतेनतस्यप्रदेशस्यनिर्जनत्वंतेनतदेवावयोःसंकेतस्थानमितिकामुकंप्रतिसूचनंलक्ष्यते

नंहरिंप्रणमंतीसतीजुगूह गोपितवती त्यन्वयः लक्ष्यते व्यज्यते

एवमिति सूक्ष्मालंकारवदुक्तिरूपव्यापारवर्णनमित्यर्थः उदाहर्तव्यमिति यथावक्रस्यंदीतिपद्यएव आली बालां सस्मितप्राह मंदंमुग्धाक्षिवामघपश्यामिनाथमित्युत्तरार्धनिर्माणे नाथमित्युक्त्याप्रकाशनमिति बोध्यं वस्तुसौंदर्येति वेतसनिकुंजरूपवस्तु

नचात्र ध्वनिराशंकनीयः दूरेव्यज्यमानस्यापि संकेतस्थान प्रश्नोत्तरस्य स्वोक्त्यैवाविष्कृतत्वात् एवं पिहि तालंकारेष्युदाहार्यं इदंचान्यदत्रावधेयं यत्रासौवेतसीपांथेत्यादिपु गूढोत्तरसूक्ष्मपिहितव्याजोक्त्यु दाहरणेपुभावोन स्वोक्त्याविष्कृतः किंतु वस्तुसौंदर्यबलाद्वक्तृबोद्धव्यविशेषविशेषिताद्गम्यः तत्रैव वस्तु तो नालंकारत्वंध्वनिभावास्पदत्वात् प्राचीनैः स्वोक्त्या विष्करणे सत्यलंकारास्पदतास्तीतित्कदाहृत त्वादस्माभिरप्युदाहृतानि शक्यंहि यत्रासौवेतसीपांथतत्रेयंस्फतरासरित् इतिपृष्टंतमध्वानंकामि न्याहससूचनं इत्याद्यर्थांतरकल्पनयाभावाविष्करणमित्यतः प्राक्लिखितोदाहरणेषु संकेतकालमन संपुरस्त्वंतन्व्यावयंजयंतीभामाजुगूहेतिभावाविष्करणमस्तितेष्वेवतत्तदलंकार इति सौंदर्येत्यर्थः ध्वनिभावास्प

दत्वात् ध्वनिताश्रयत्वात् उपसंहरति अतइति येषित्यस्यभावाविकरणमस्तीत्यनेनान्वयः इतिव्याजोक्तिः ७ ७

गूढोक्तिरिति यदन्योद्देशकं वाक्यं तत्तदन्यं प्रतिकथ्यते चेत् गूढोक्तिरलंकारः क्षेत्रं सस्यादः कलत्रं च अपेहि दूरीभव अविवक्षितत्वा-
दिति अयंभावः प्रकृताप्रकृतश्लेषेऽमावुदयमारूढ इत्यादावप्रकृतार्थस्य प्रकृतार्थोपमानतयान्वयः स्वीक्रियते सर्वदैव प्रकृतासंबद्ध-
स्याप्रकृतार्थस्य कथनेऽसंबंधार्थाभिधायकत्वापत्तेः न प्रकृतेपि श्लेषवादिनाऽप्रकृतस्य प्रकृतसंबंधो वाच्यः स च न संभवति विवक्षाविरहा

गूढोक्तिरन्योद्देश्यं चेद्यदन्यं प्रतिकथ्यते वृषापेहि परक्षेत्रादायाति क्षेत्ररक्षकः यं प्रति किंचिद्वक्तव्यं तत्तटस्थे मा ज्ञायीति तदेव तदन्यं कंचित्प्रति श्लेषेणोच्यते चेत्सा गूढोक्तिः वृषेत्याद्युदाहरणं परकलत्रं भुंजानं कामुकं प्रति वक्तव्यं परक्षेत्रे सस्यानि भक्षयंतं कंचिदुक्षाणं समीपचरं तं निर्दिश्य कथ्यते नेयमप्रस्तुतप्रशंसा कार्यकारणादिव्यंग्यत्वाभावात् नापि श्लेषमात्रमप्रकृतार्थस्य प्रकृतार्थान्वयित्वेनाविवक्षितत्वात् तस्य केवलमितरवंचनार्थं निर्दिष्टतया विच्छित्तिविशेषसद्भावात् दिति कुतस्तर्ह्यप्रकृतार्थकथनं तत्राह तस्येति अप्रकृतार्थ-
स्येत्यर्थः ननु तादृशाविवक्षाविरहेपि नानार्थविन्यासमात्रेणास्तु श्लेष एवेत्याशंक्याह विच्छित्तिविशेषेति तथा च श्लेषसत्वेपि विच्छित्ति-
विशेषाद्गूढोक्तिरवश्यमंगीकार्येत्याशयः अत एव श्लेषमात्रमिति तन्मात्रनिराकरणमेवोपक्रांतं न तु श्लेषनिराकरणमिति ७

नाथइति विपणिः पण्यवीथिका पुष्पिणी रजस्वला आगमेन वेदेन लालनीयः स्तुत्यः आगमनेन लालनीयश्च रजनीं व्याप्येत्यर्थः

यथावा नाथो मे विपणिं गतो न गणयत्येषा सपत्नी च मां त्यक्त्वा मामिह पुष्पिणीति गुरवः
प्राप्ता गृहान्ध्यं तरं शय्यामात्रसहायिनी परिजनः श्रांतो न मां सेवते स्वामिन्नागमलाल
नीयरजनी लक्ष्मीपते रक्ष मां अत्र लक्ष्मीपतिनाम्नो जारस्यागमनं प्रार्थयमानायास्त
दृस्थवंचनाय भगवंतं प्रत्याक्रोशस्य प्रत्यायनं विवृतोक्तिः श्लिष्टगुप्तं कविना विवृतं य
दि वृषापेहि परक्षेत्रादिति वक्ति सूचनं श्लिष्टगुप्तं वस्तु यथा कथंचित्कविना विवृतं
चेद्विवृतोक्तिः वृषापेहीत्युदाहरणे पूर्ववत् गुप्तं वस्तु ससूचनमिति कविना विवृतं

तसंयोगे द्वितीया इति गूढोक्तिः श्लिष्टगुप्तमिति श्लिष्टेत्युपलक्षणं अर्थशक्तिमूलगुप्तस्यापि गच्छाम्यच्युतेत्यादौ संग्राह्यत्वात् ७

गच्छाम्यंति अच्युतमद्विषये अस्खलितेति गुप्तोर्थः चिरकालं त्वद्दर्शनेनापि न तृप्तिरित्यर्थः न दर्शनेन न तृप्तिरपि तु संभोगेनेत्यर्थो गुप्तः विजनस्थयोरेकांतगतयोः हृतश्चासौ जनः अन्यथा रत्यर्थं स्थिताविति संभावयति तेन द्वयोरकीर्त्तिर्जातैवेत्यर्थेवात्मानं वंच

गच्छाम्यच्युत दर्शनेन भवतः किं तृप्तिरुत्पद्यते किं चैवं विजनस्थयोर्हतजनः संभावय
त्यन्यथा इत्यामंत्रणभंगिसूचितवृथावस्थानखेदालसामाश्लिष्यन्पुलकोत्करां
चिततनुर्गोपीं हरिः पातु वः अत्र गच्छाम्यच्युतेत्यामंत्रणेन त्वया रंतुं कामेच्छयास्थितं
तन्न लब्धमित्यर्थः शक्तिलभ्यं वस्त्वतृतीयपादेनाविष्कृतं सर्वमेतत्कविनिबद्धवक्तृगुप्ता
विष्करणोदाहरणं कविगुप्ताविष्करणं यथा ॥ ॥ ॥

यावदितिगुप्तार्थः आमं
त्रणस्याच्युतेत्यादेर्भंग्यारचनया सूचितो यो वृथावस्थानखेदस्तेनालसां कविनिबद्धेति कविनिबद्धेन वक्त्रा गुप्तस्येत्यर्थः ॥ ॥

स्सुत्वमिति शोभनभ्रूर्दयिता दृष्टिश्च तयोःसंबोधनं कोपोरोषः विकारश्च रागिण्यनुरागिणीति अवनतेनम्रेइतिचम
यीत्यस्यविशेषणं पक्षेरागिणिरक्तिमशीले नम्रेइतिदृक्संबोधनं एवंदृष्टेइत्यपि उच्चारणेनेति स्वरविशेषसहकृतोच्चार

स्सुत्वंकुपितेत्यपास्तमशानंत्यक्ताःकथायोषितां दूरादेवविवर्जिताःस्मरभयःस्त्रग्गंधधूपा
दयः कोपंरागिणिमुंचमय्यवनतेदृष्टेप्रसीदाधुनासत्यंतद्विरहाद्भवंतिदयितेसर्वाममोधादि
शः अत्रतावदीर्ष्यामानकलुषितदयिताप्रसादनव्यापारविधिःप्रतीयते दृष्टिरागार्त्तस्यदृ
ष्टिंप्रत्याक्रोशोविवक्षितार्थःसचदृष्टेइत्यस्यपदस्यलुप्तोच्चारणेनसंबुद्धिरूपतामवगमय्यावि
ष्कृतः कविनिबद्धवक्तृगुप्तंपरवंचनार्थं कविगुप्तंस्वप्रौढिकथनार्थमितिभेदः युक्तिःपराति
संधानंक्रिययामर्मगुप्तये त्वामालिखंतीदृष्ट्वान्यधनुःपौष्पंकरेलिखत् अत्रपुष्पचापलेख
नक्रियया मन्मथोमयालिखितइतिभ्रांत्युत्पादनेनस्वानुरागरूपमर्मगोपनायपरवंचनंविवक्षितं

णेनेत्यर्थः इतिविवृतोक्तिः युक्तिरिति स्वस्यमर्मगोपनायक्रियायायत्परस्यातिसंधानंवंचनंसायुक्तिरलंकारः त्वामिति नायकंप्रति
दूतीवचनं पुष्पस्यैदंपौष्पं

दंपत्योरिति तस्य [illegible] दत्तइतिसंबंधः फलशब्दोबीजपरः गोपनीयविषयभेदस्यविछित्तिभेदाप्रयो
जकत्वादाह यद्वेति [illegible] दोव्याजोक्तिरेवेतिप्रागुक्तंविरुध्येतेत्याशंक्याहएवंचेति यद्वेतिपक्षांगीकारेचे

यथावा दंपत्योर्निशिजल्पतोर्गृहशुकेनाकर्णितंयद्वचस्तत्प्रातर्गुरुसन्निधौनिगदतस्तस्यातिमात्रंवधूः कर्णालंबितपद्मरागशकलंविन्यस्यचंचूपुटेव्रीडार्त्ताविदधातिदाडिमफलव्याजेनवाग्बंधनं .अत्रशुकवाङ्मुद्रणयातन्मुखेनस्वकीयरहस्यवचनश्वश्रूषुजनवंचनंकृतं व्याजोक्तावाकारगोपनं युक्तौतदन्यगोपनमितिभेदः यद्वा व्याजोक्तावुक्त्यागोपनमिहतुक्रिययागोपनमितिभेदः एवंचआयातमालोक्यहरिंप्रतोल्यामितिश्लोकेपियुक्तिरेव लोकप्रवादानुकृतिर्लोकोक्तिरितिभण्यते सहस्वकतिचिन्मासान्मीलयित्वाविलोचने अत्रलोचनेमीलयित्वेतिलोकवादानुकृतिः यथावा मदीयेवरदराजस्तवे

त्यर्थः एवंचपूर्वग्रंथआद्यपक्षाभिप्रायेणेतिभावः इतियुक्तिः लोकेति अनुकृतिरनुकरणं सहस्वेति अर्थाद्विरहं मासानभिव्याप्येत्यर्थः १ १ १

नाभेवेति हे वरदं ततवं नामैव वांछितदातृत्वमाख्याति कथयति अतस्त्वं वरदानमुद्रामितरदैवतवन्न धारयसि यतो विश्वप्रसिद्धतर विप्रकुले प्रसूतिरुत्पत्तिर्यस्य तादृशस्येत्यर्थः इति लोकोक्तिः छेकोक्तिरिति लक्ष्यनिर्देशः अर्थांतरगर्भिता अर्थांतरव्यंजक

नामेवेति वरद वांछितदातृभावं व्याख्याति तो न वहसि वरदानमुद्रां विश्वप्रसिद्धतरविप्रकुलप्रसूते यज्ञोपवीतवहनं हि न खल्वपेक्ष्यं अत्रोत्तरार्द्धे लोकवादानुकारः छेकोक्तिर्यदि लोकोक्तेः स्यादर्थांतरगर्भिता भुजंग एव जानीते भुजंगचरणं सखे केनचित्कस्यचिद्वृत्तांते पृष्टे स्य समीपस्थमन्यं निर्दिश्याय मेवतस्य वृत्तांतं जानातीत्युक्तवतीयमहेः पादान हिरेव जानातीति लोकवादानुकारः अत्र सचायं च लोकविदिते धनार्जनादिव्यापारे सहचारिणाविति विदितविषयतया लोकोत्त्यनुवादस्य प्रयोजने स्थिते रहस्ये प्यनंगव्यापारे तस्यायं सहचर इति मर्मोद्घाटनमपि तेन गर्भीकृतं

ता समीपस्थं यद्वृत्तांतः पृष्टस्त्समीपस्थं सचायं चेति पृच्छ्यमानवृत्तांतस्तत्समीपस्थश्चेत्यर्थः तेन लोकोत्त्यनुवादेन

मलयेति व्राताः समूहाः याताः गताः विकासिनां मल्लिकाकुसुमानां परिमलस्य भरो यस्मिन् तादृशो ग्रीष्मो भग्नो नष्टः हे घनलं
य त्वमुत्सहसे उत्साहवान् भवसि तदा तं निःस्नेहं मां यः कोपि त्यजति अनया सह गमं आजयः गवां निवर्त्तने परापहृतानां व्यावर्त्तने य एव प्रभ

यथावा मलयमरुत्व्राता याता विकासित मल्लिका परिमल भरो भग्नो ग्रीष्मस्त्वमुत्सहसे यदि घन घटय
तं त्वन्निस्नेहं य एव निवर्त्तने प्रभवति गवां किन्नः छिन्नः स एव धनंजयः अत्र धनलिप्सया प्रोषितांगनास
खीवचने य एव गवां निवर्त्तने प्रभवति स एव धनंजय इत्यां ध्रजाति प्रसिद्ध लोकवादानुकारः अत्रा
तिसौंदर्यशालिंनीमिमामपहाय धनलिप्सया प्रस्थितोरमानभिज्ञत्वात् गोप्राय एव तस्यानिवर्त्तकस्त्व
धनस्यजेता धनेनाकृष्टस्य तद्धि सुखीकरणेन प्रत्याक्षेपकत्वादित्यर्थांतरमपि गर्भितं ॰ ७, ९

वति स एव धनंजयोर्जुन इत्यन्वयः लिप्सया प्रोषितस्य यांगना तत्सखीवचन इति संबंधः आंध्रास्तैलंगाः इमां मत्सखीं गोप्रायो गोतु
ल्यः इतिछेकोक्तिः

वक्रोक्तिरिति काकुर्ध्वनेर्विकारः अपरार्थस्य अभिप्रेतादर्थादर्थान्तरस्य नंदीहरस्यगणविशेषः दारुणाक्रूरेत्यभिप्रेतं काष्ठेनेतिकल्पनं विकृतत्वंच कस्यचिद्वर्णस्यावापोद्वापाभ्यां भवित्रीति सीतांप्रतिरावणोक्तिःपादत्रयं चतुर्थस्तंप्रतिसीतायाः तेतवपातिः सरामोयुधिसं

वक्रोक्तिः श्लेषकाकुभ्यामपरार्थप्रकल्पनं मुंचमानंदिनंप्राप्तंनेहनंदीहरांतिके अत्रमानंमुंचप्रयाता रात्रिरित्याशयेनोक्तायांवाचिनंदिनंप्राप्तंमामुंचेत्यर्थान्तरंश्लेषेणपरिकल्पितं यथावा अहोकेनेदृशीबुद्धिर्दारुणातवनिर्मिता त्रिगुणाश्रूयतेबुद्धिर्नतुदारुमयीकचित् इदमविकृतश्लेषोक्तेरुदाहरणं विकृतश्लेषवक्रोक्तेर्यथा भवित्रीरंभोरुत्रिदशवदनग्लानिरधुनासतेरामःस्थातानयुधिपुरतोलक्ष्मणसखः इयंयास्यत्युच्चैर्विपदमधुनावानरचमूर्लघिष्ठेदंषष्ठाक्षरपरविलोपात्पठपुनः सर्वमिदं शब्दश्लेषमूलायावक्रोक्तेरुदाहरणं

ग्रामेपुरतोग्रतोनस्थातास्थास्यतीत्यर्थः अतिशयेनलघुर्लघिष्ठस्तत्संबोधनं इदं पादत्रयं षष्ठाक्षरात्परणांससमानांत्रिनवीतिवर्णानांविलोपोयत्रतादृशंपुनःपठेत्यर्थः शब्दश्लेषेति शब्दस्यपरिवृत्त्यसहत्वादिति भावः

...श्वेति जलनि... तत्कन्ययोर्लक्ष्मीपार्वत्योः क्रमेण इत्थं लीलया संलापो मिथोभाषणं नोस्मान् त्रायतामित्यन्वयः इ
...र्कादिकृतदाह भिक्षार्थीति हरमभिनि...त्य लक्ष्म्या वाक्यं बलेर्दैत्यस्य मखे यज्ञे इति वामनाभिप्रायं पार्वत्याः भद्रे शोभने तांडवं नृ
...मद्यक वर्त्तत इति लक्ष्म्याः प्रश्नस्योत्तरं वृंदावनस्यांते मध्ये इति श्रीकृष्णाभिप्रायं मृगशिशुः महादेवेन करे धृतः परशुर्मृगवराभी

अर्थश्लेषमूला या वक्रोक्तिर्यथा भिक्षार्थी स क्व यातः सुतनु बलिमखे तांडवं क्वाद्य भद्रे मन्ये वृंदावनांते क
नुस मृगशिशुर्नैव जाने वराहं बाले कच्चिन्न दृष्टो जरठवृषपतिर्गोप एवास्य वेत्ता लीलासंलाप इत्थं जल
निधिहिमवत्कन्ययोस्त्रायतां नः काकुर्यथा असमालोच्य कोपस्ते नोचितो यमितीरिता नैवोचितो
यमिति तं ताडयामास मालया अत्र नैवोचित इति काकुस्वरविकारेणोचित एवेत्यर्थांतरकल्पनं

तिहस्तं प्रसन्नमिति ध्यानश्रवणात् इदं लक्ष्म्या वाक्यं नैवेति पार्वत्याः मृगः पशौ कुरंगे चेति विश्वः कच्चिदिति प्रश्ने जरठो जीर्णः वृष
पतिर्वृषश्रेष्ठ इति हरवृषभाभिप्रायं लक्ष्मीवाक्यं गोपो गवां पालक इति कृष्णाभिप्रायमुत्तरमिति अत्र भिक्षादिपदानां परिवृत्तिसह
त्वादर्थश्लेषमूलत्वं असमालोच्येति अविचार्येत्यर्थः मालया पुष्पमालया इति वक्रोक्तिः ७ ७

स्वभावोक्तिरितिलक्ष्यनिर्देशः जात्यादिस्थस्यजात्यादिसंबंधिनः आदिपदेनक्रियादिपरिग्रहः उत्तरंगाणिलरंगायमापान्यक्षी
णियेषांतेः तावितिं तौप्रक्रांतौवधूवरौ गुरूणांसमीपेअन्योन्याभिमुखंप्रचलितौपरस्परस्यमार्गप्रदानेयोरभसोवगत्तनस्ख

स्वभावोक्तिः स्वभावस्यजात्यादिस्थस्यवर्णनं कुरंगैरुत्तरंगाक्षैःस्तब्धकर्णैरुदीक्ष्यते यथा
वा तौसंमुखप्रचलितौ सविधेगुरूणांमार्गप्रदानरभसस्खलितावधानौ पार्श्वोपसर्पणमुभा
वपिभिन्नदिक्कं कृत्वामुहुर्मुहुरुपासरतांसलज्जं भाविकंभूतभाव्यर्थसाक्षात्कारस्यवर्ण
नं अहंविलोकयेऽद्यापियुध्यंतेत्रस्फरास्फराः स्थानभीषणत्वोद्भावनपरमिदं ७

लितं भ्रष्टंमवधानंसावधानत्वंययोस्तादृशौउभावपि
भिन्नदिक्कंवामदक्षिणरूपदिक्संबंधिपरस्परपार्श्वभागोपसर्पणंमुहुर्मुहुः कृत्वासलज्जंयथास्यात्तथोपासरतां उपसर्पणंचक्रतु
रित्यर्थः पूर्वोदाहरणेकुरंगजातिस्वभाववर्णनं अत्रसलज्जक्रियास्वभाववर्णनमितिभेदः इतिस्वभावोक्तिः भाविकमितिलक्ष्यनिर्देशः

अद्यापीति ममनयनंनयनमितितस्यावाचंनिशम्यस्तनतटात्पतितमुत्तरीयंधर्तुंपुरः प्रवृत्तेमयिसतितदाआयताक्षीयत्किंचित्स्मितमकरोत् इदमद्यापिममदृशोःपुरस्तिष्ठतीत्यन्वयः अत्रनयनपदेनस्ववाचकत्वरूपशक्यसंबंधेननेत्रपदंलक्ष्यते तस्माच्च वस्त्रप्रतीतिः किंवास्ववाचकवाच्यत्वरूपशक्यसंबंधेनवस्त्रमेवलक्ष्यतीतिवचोबाणेरित्यादिवल्लक्षितलक्षणावाबोध्या नेत्रं

यथावा अद्यापितिष्ठतिदृशोरिदमुत्तरीयंधर्तुंपुरस्तनतटात्पतितंप्रवृत्ते वाचंनिशम्य
नयनंनयनंममेतिकिंचित्तदायदकरोत्स्मितमायताक्षी उदात्तमृद्धेश्वरितंश्लाघ्यंचान्योपल
क्षणं सानोयस्याभवद्युद्धंतद्धूर्जटिकिरीटिनोः इदंश्लाघ्यचरितस्यान्यांगत्वेउदाहरणं ऋ
ध्युदाहरणंयथा रत्नस्तंभेषुसंक्रांतैःप्रतिबिंबशतैर्वृतः ज्ञातोलंकेश्वरःकृच्छ्रादांजनेयेनतत्वतः

पाथिगुणेवस्त्रइतिविश्वः इतिभाविकं उदात्तमिति ऋद्धेःसमृद्धेश्चरितंउदात्तालंकारः तथाश्लाघ्यंचरितंअन्यस्योपलक्षणमंगंचेत्तदपितथा सानोशिखरेयस्यपर्वतस्य किरीटीअर्जुनः कृच्छ्रात्कष्टात् आंजनेयेनहनूमता इत्युदात्तं

अत्युक्तिरिति लक्ष्यनिर्देशः अद्भुतं च तदतथ्यं मिथ्यारूपं अकूपाराः समुद्राः आहुरिति स्वमनेन तु तथ्यत्वातथ्यत्वाभ्यां भेद इति भावः अतथ्ये अद्भुतत्वविशेषणस्य कृत्यं दर्शयति अनयोरित्यादि एतत्पद्ययोगेऽप्ययोगो संबंधातिशयोक्तिरित्यत्र प्रागुदाहृतं असदुक्तितारतम्येनेति अनयोरित्यत्रासदुक्तिमात्रं अल्पमिति पद्ये त्वत्यंतासदुक्तिरिति तारतम्येनेत्यर्थः तथा चाद्भुतेति विशेषणादत्यं

अत्युक्तिरद्भुतातथ्यशौर्यौदार्यादिवर्णनं त्वयि दातरि राजेंद्र याचकाः कल्पशाखिनः इयमौदा
र्यात्युक्तिः शौर्यात्युक्तिर्यथा राजन्सप्ताप्यकूपारास्त्वत्प्रतापाग्निशोषिताः पुनस्त्वद्वैरिवनिता
बाष्पपूरेण पूरिताः संपदत्युक्तावुदात्तालंकारः शौर्यात्युक्तावत्युन्नयलंकार इति भेदमाहुः अन
योरनवद्यांगि स्तनयोर्जृंभमाणयोः अवकाशो न पर्याप्तस्तव बाहुलतांतरे अल्पं निर्मितमाका
शमनालोच्यैव वेधसा इदमेवंविधं भाविभवत्याः स्तनमंडलमिति संदसदुक्तितारतम्येनातिशयात्यु
क्त्योर्भेदः तातथ्यरूपत्वलाभान्नातिशयोक्तावतिव्याप्तिरिति भावः अत एवानयोरिति पद्यानंतरं दंडिनोक्तं इति संभाव्यमेवैतद्विशेषाख्यानसंस्कृतमिति एवं लोकातीत इवात्यर्थमध्यारोप्य विवक्षितः योऽर्थस्तेनातितुष्यंति विदग्धा नेतरे यथेत्युक्त्वा अल्पं निर्मितमित्याद्युदाहृत्य इदमत्युक्तिरित्युक्तमिति च इत्यत्युक्तिः

निरुक्तिरितिलक्ष्यं योगवशान्नाम्नामर्थविशेषाभिधायिनामर्थांतरोपवर्णनमितिलक्षणं ईदृशोरिति चंद्रंप्रतिविरहिण्याउक्तिः इदृशैर्जनसंतापनरूपैःदोषायारात्रेःकर्त्ता दोषाणाभाकरश्च पुरेति कनिष्ठिकांगुलिविशेषः आधिष्ठितःकालिदासोयस्यांसा अंगुलिविशेष 

।निरुक्तिर्योगतोनाम्नामन्यार्थत्वप्रकल्पनं ईदृशैश्चरितैजानेसत्यंदोषाकरोभवान् यथावा पुराकवीनांगणनाप्रसंगेकनिष्ठिकाधिष्ठितकालिदासा अद्यापितत्तुल्यकवेरभावादनामिकासार्थवतीबभूव प्रतिषेधः प्रसिद्धस्यनिषेधस्यानुकीर्त्तनं नद्यूतमेतत्कितवक्रीडनंनिशितैःशरैः निर्ज्ञातोनिषेधःस्वतोनुपयुक्तत्वादर्थांतरंगर्भीकरोति तेनचारुतान्वितोयंप्रतिषेधनामालंकारः उदाहरणं युद्धरंगेप्रत्यवतिष्ठमानंशकुनिंप्रतिविदग्धवचनं तत्रयुद्धस्याक्षद्यूतत्वाभावोनिर्ज्ञातएवकीर्त्यमानस्तत्रैवतवप्रागल्भ्यंनयुद्धेव्युत्पत्तिग्रहोस्तीत्युपहासंगर्भीकरोति तच्चकितवेत्यनेनाविष्कृतं रूपा अर्थवती नविद्यतेकविनामयस्यांसेत्यन्वर्थनामवती इतिनिरुक्तिः कितवोद्यूतकृत् धूर्त्तोऽक्षदेवीकितवइत्यमरः ननुप्रसिद्धानुवादस्याचमत्कारित्वात्कथमलंकारत्वमत आहनिर्ज्ञातइत्यादि शकुनेपाशकैर्दीव्यतीतिशाकुनिकः आविष्कृतामितिध्वनित्वशंकानिवारणं एवमग्रेपि इतिप्रतिषेधः ७

पंचमस्य स्वरविशेषस्योदंचनमाविष्करणं यत्र तादृशे काले कोकिलः कोकिलो मधुरध्वनिरभवदित्यर्थः द्वितीयकोकिलपदस्यानुपयुक्तार्थत्वे

यथा वा न विषेण न शस्त्रेण नाग्निना न च मृत्युना अप्रतीकारपारुष्याः स्त्रीभिरेव स्त्रियः कृताः अत्र स्त्रीणां विषादिनिमित्तकाभावः प्रसिद्ध एव कीर्त्यमानस्तासां विषाद्यतिशायित्वं कार्यमिति अमुमर्थं व्यक्तीकरोतीति स चाप्रतीकारपारुष्या इति प्रतीकारवद्भ्यो विषादिभ्यस्तासां विशेषं दर्शयता विशेषणेनाविष्कृतः सिद्धस्यैव विधानं यत्तदाहुर्विध्यलंकृतिं पंचमोदंचने काले कोकिलः कोकिलो भवेत् निज्ञातविधानमनुपयुक्तिबाधितं सदर्थांतरगर्भीकरणेन चारुतरमिति तं विधिनामानमलंकारमाहुः उदाहरणे कोकिलस्य कोकिलत्वविधानमनुपयुक्तं सदति मधुरपंचमध्वनिशालितया सकलजनहृद्यत्वं गर्भीकरोति तच्च पंचमोदंचने इति कालविशेषणेनाविष्कृतं

नार्थांतरे संक्रमितत्वात् सकलजनहृद्यत्वप्रतीतिश्च प्रयोजनं एवं

चशालितयेत्यनंतरं लक्षितयेति शेषो बोध्यः पूर्ववत् ध्वनित्वाशंकानिवारणाय तच्चेत्याद्युक्तं

१ ३

हेहस्तेति शूद्रतपस्याजनिताधर्मवशादपूर्णायुषि द्विजबालके मृते तद्धोधतस्य रामस्य स्वहस्तं प्रति इयमुक्तिः। जीवातवे जीवनाय शूद्र एव तपश्चरणान्मुनिरिव मुनिः तस्मिन्कृपाणं खड्गं विसृज निक्षिप यतो रामस्याकरुणस्य गात्रं शरीरमसि निर्भरमतिशयेन गर्भखिन्नायाः सीतायाः प्रवासने निर्वासने तत्र पटोर्दक्षस्येत्यर्थः अत्र रामपदमकरुणत्वरूपार्थान्तरसंक्रमितं तदतिशयो व्यंग्यः सचालं

यथा वा हे हस्त दक्षिण मृतस्य शिशोर्द्विजस्य जीवातवे विसृज शूद्रमुनौ कृपाणं रामस्य गात्रमसि निर्भरगर्भखिन्नसीताविवासनपटोः करुणा कुतस्ते अत्र रामस्य स्वहस्तं प्रति रामस्य गात्रमसीति वचनमनुपयुक्तं सद्रामस्येत्यनेन स्वस्यात्यन्तनिष्करुणत्वं गर्भीकरोति तच्च निर्भरेत्यादिविशेषणेनाविष्कृतं यद्यप्यनयोर्विधिनिषेधयोरुदाहरणेषु व्यंग्यान्यर्थान्तरसंक्रमितवाच्यरूपाणि तथापि न ध्वनिभावास्पदानि स्वोक्त्यैव व्यंग्यविशेषाविष्करणात् व्यंग्याविष्करणे चालंकारत्वमेवेति प्राक् प्रस्तुतांकुरप्रकरणे व्यवस्थितत्वात्

तमित्यनेनोक्तः ध्वनिभावास्पदानि ध्वनित्वप्रयोजकानि व्यवस्थितत्वादिति शब्दार्थशक्त्याक्षिप्तोपि व्यंग्योर्थः कविना पुनः यत्राविष्क्रियते स्वोक्त्या सान्यैवालंकृतिर्ध्वनेरिति ध्वनिकारवचनेन निर्णीतत्वादित्यर्थः ७ ७

उक्ताविति निषेधाभाससाक्षेपं बुधाः केचन मन्वते आक्षेपान्यादिविधौ व्यक्तेनिषेधे चातिरोहित इत्येताभ्यां नाहं दूती गच्छ गच्छसीत्युदाहरणयोः
प्रतिपादितावित्यर्थः प्रसिद्धत्वाद्बाधितप्रतिहं हिंत्वं इति विधिः हेतोरिति हेतुमता कार्येण मानच्छेदः कार्यं एषइति विद्रुमच्छायः प्रवालकांतिः
विगततरुच्छायश्च मरुर्निर्जलदेशः मानेइति मानेनेच्छति अनिच्छति सति एवमुपशमे वारयति सति ह्रियालज्जायां क्ष्मां भूमिमालिखं

पूर्वबाधितो प्रतिषेधो आक्षेपभेदत्वेनोक्तो इह तु प्रसिद्धौ विधिप्रतिषेधौ तत्प्रातिहं ह्निनावलंकारत्वेन वर्णिता
विति भेदः हेतोर्हेतुमता सार्द्धं वर्णनं हेतुरुच्यते असावुदेति शीतांशुर्मानच्छेदाय सुभ्रुवो यथावा एषतवि
द्रुमच्छायो मरुमार्गइवाधरः कस्य नातनुते तन्वि पिपासाकुलितं मनः मानेनेच्छति वारयत्युपशमे क्ष्मामा
लिखंत्यां ह्रियां स्वातंत्र्ये परिवृत्य तिष्ठति करौ व्याधूय धैर्ये गते तृष्णे त्वामनुबध्नता फलमियत्प्राप्तं जनेनामुना
त्स्पृष्टो न पदा स एव चरणौ स्प्रष्टुं न संमन्यते इत्युदाहरणं त्यां भूम्युल्लेखनस्य तदनुभावत्वात् स्वातंत्र्ये च परिहृत्य पराङ्मु
खी भूय तिष्ठति सति धैर्ये करौ व्याधूय मम नानुमतमिति सूचनाय हस्तधूननं कृत्वा गते सति हे तृष्णे त्वामनुसरतामुना जनेनैतावत्फलं
प्राप्तं यत्पादेनापि यो न स्पृष्टः स एव चरणौ स्वीयौ स्प्रष्टुं न सम्यक् मन्यते अनुजानातीत्यन्वयः अत्र तृष्णारूपहेतुतत्कार्ययोः स्पष्टमा [illegible]

भेदांतरमाह हेतुहेतुमतोरिति केचित् भट्टोद्भटप्रभृतयः तदुक्तं हेतुमता सह हेतोरभिधानमभेदता हेतुरिति लक्ष्मीति कटाक्षाः विदुषां लक्ष्मीविलासा इत्यन्वयः अत्र विलासहेतोर्विलासाभिन्नत्वेनाभिधानं एवंविधलक्षणायाः प्रयोजनमाह अत्रेति कार्यावश्यंभावश्च तच्छैघ्र्यं चेति विग्रहः आदिना अपथ्याशनं रोग इत्यादौ कार्यगतोपादेयत्वानुपादेयत्वादिसंग्रहः आयुरिति वीरः कलिंगेश्वरः

हेतुहेतुमतोरैक्यं हेतुं किंचिल्लक्षते लक्ष्मीविलासा विदुषां कटाक्षा वेंकटप्रभोः अत्र च कार्यावश्यंभावतच्छैघ्र्यादि प्रत्यायनार्थः कार्यकारणभेदव्यपदेशः यथा वा आयुर्दानमहोत्सवस्य विनतक्षोणीभृतां मूर्तिमान् विश्वासो नयनोत्सवो मृगदृशां कीर्त्तेः प्रकाशः परः आनंदः कलिताकृतिः सुमनसां वीरश्रियो जीवितं धर्मस्यैष निकेतनं विजयते वीरः कलिंगेश्वरः अत्र दानमहोत्सवायुष्करत्वादिनाध्यवसिते राज्ञि तदायुष्ट्वादिव्यपदेशः

कलिंगदेशाधिपो विजयत इत्यन्वयः कीदृशः दानरूपस्य महोत्सवस्य आयुरिति कार्याभिन्नत्वेनाभिधानं एवमग्रेपि विशेषेण नतानां क्षोणीभृतां राज्ञां कलिताकृतिः धृताकारः वीरश्रियः वीरलक्ष्याः निकेतनं स्थानं इति श्रीमत्पदवाक्यप्रमाणाभिज्ञतत्सदुपाख्यभट्टविठ्ठलसूरिवंशजश्रीरामचंद्रसूरिसूनुना वैद्यनाथेन कृतायामलंकारचंद्रिकाख्यायां कुवलयानंदटीकायां हेत्वलंकारप्रकरणं संपूर्णं

भावस्येति निर्वेदादेर्व्यभिचारिभावस्येत्यर्थः प्रत्यक्षप्रमुखाः प्रत्यक्षाद्याः तेचप्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धिसंभवैति ह्यारव्याः विभावेत्यादि रत्यादेरालंबनोद्दीपनरूपाणि नायिकाचंद्रोदयादीनिकारणानिकाव्येवर्ण्यमानानिविभावयंतीतिव्युत्पत्त्याविभावपदेनाभिधीयंते कार्याणिचकटाक्षरोमांचादीनि तथाविधान्येवानुपश्चाद्भवंतीतिव्युत्पत्त्यानुभावपदेन एषामेवकार्याणांरत्यादि

इत्थंशतमलंकारालक्षयित्वानिदर्शिताः प्राचामाधुनिकानांचमतान्यालोच्यसर्वतः रसभावतदाभासभावशां
तिनिबंधनाः चत्वारोरसवत्प्रेयऊर्जस्विचसमाहितं भावस्यचोदयःसंधिःशबलत्वमितित्रयः अष्टौप्रमाणा
लंकाराःप्रत्यक्षप्रमुखाःक्रमात् एवंपंचदशान्यानप्यलंकारान्विदुर्बुधाः तत्रविभावानुभावव्यभिचारिभिर्व्यंजितो
रतिहासशोकादिश्चित्तवृत्तिविशेषोरसः सयत्रपरस्यांगंभवतितत्ररसवदलंकारः

नोत्पादनेकर्तव्येसहकारिभूतान्युत्कंठादीनिच व्यभिचारिपदेन विशेषाद्भितः समंततः येस्थायिनंचारयंतीतिव्युत्पत्तेः एवंरतिरासक्त्यनुरागादिपर्यायबोध्यांतःकरणवृत्तिः विकृतविदूषिकादिचेष्टादर्शनजन्याचित्तस्यविकासरूपावृत्तिर्हासः इष्टनाशानिष्टलाभादिजन्याचित्तवृत्तिः शोकःप्रसिद्धः आदिपदेनक्रोधोत्साहभयजुगुप्साविस्मयनिर्वेदाख्यानांषण्णांपरिग्रहः विशेषपदेनचरत्यादेःस्थायित्वप्रयोजकंपरिपुष्टत्वंकांताविषयत्वमितरानंगत्वंच विवक्षितं

तदुक्तं रत्यादिश्चेन्निरंगः स्याद्देवादिविषयोऽथवा अन्यांगभावभाग्वास्यान्नतदास्थायिशब्दभागिति स्थायिन एवचाभिव्यक्तरसत्वं यदाहुः कारणान्यथकार्याणि सहकारीनियानिच रत्यादेः स्थायिनालोकेतानिचेन्नाट्यकाव्ययोः विभावाअनुभावास्तत्कथ्यंतेव्यभिचारिणः व्यक्तः सतैर्विभावाद्यैः स्थायीभावोरसः स्मृतइति अभिव्यक्तानांच रत्यादीनां रसरूपाणांक्रमातृश्रृंगारहास्यकरुणरौद्रवीरभयानकबीभत्साद्भुतशांतरूपविशेषसंज्ञाबोध्याः निर्वेदादिरिति निर्वेदग्लानिशंकाख्यास्तथासूयामदश्रमाः आलस्यंचैवदैन्यं

विभावानुभावाभ्यामभिव्यंजितो निर्वेदादिस्त्रयस्त्रिंशद्भेदो देवतागुरुशिष्यद्विजपुत्रादावभिव्यज्यमाना रतिश्च भावः सयत्रापरस्यांगं स प्रेयोलंकारः ७

च चिंता मोहः स्मृतिर्धृतिः व्रीडा चपलता हर्ष आवेगोजडतातथा गर्वोविषादऔत्सुक्यं निद्राविस्मृतिरेवच स्वप्नोविबोधोऽमर्षश्चाप्यवहित्थमथोग्रता मतिर्व्याधिस्तथोन्मादस्तथामरणमेवच त्रासश्चैववितर्कश्च विज्ञेयाव्यभिचारिणः त्रयस्त्रिंशदमीवाः समाख्याताःस्तनामत इति भरतेनोक्ताः लज्जादिना विकारगोपनमवहित्थाख्योभावः देवतेत्याद्यपरिपुष्टत्वादेरुपलक्षणं रतिरितिचापुष्टहासादेः ७ ७

अनौचित्येनेति एतच्चोदाहरणे दर्शयिष्यामः मुनिरिति कुंभसंभवोऽगस्त्यः एकचुलकेन समुद्रे पीयमाने तदंतर्गतयोरखतारस्रूप
योर्मत्स्यकूर्मयोर्दर्शनेन गम्योऽद्भुतरसो मुनिप्रभावातिशयपर्यवसन्नतया तद्विषयरतिपोषकत्वात्तदंगमिति भावः अयमिति भूरि

अनौचित्येनप्रवृत्तो रसो भावश्च रसाभासो भावाभासश्चेत्युच्यते स यत्रापरस्यांगं तदूर्जस्वित् भावस्य प्रशा
म्यदवस्था भावशांतिः तस्याः परांगत्वे समाहितं भावस्योद्गमावस्था भावोदयः द्वयोर्विरुद्धयोर्भावयोः पर
स्परस्पर्धा भावसंधिः बहूनां भावानां पूर्वपूर्वोपमर्देनोत्पत्तिर्भावशबलता एतेषामितरांगत्वे भावोदया
दयस्त्रयोऽलंकाराः तत्र रसेवदुदाहरणं मुनिर्जयति योगींद्रो महात्मा कुंभसंभवः येनैकचुलके दृष्टौ दि
व्यौ तौ मत्स्यकच्छपौ अत्र मुनिविषयरतिरूपस्य भावस्याद्भुतरसोंऽगं यथा वा अयं स रसनोत्कर्षी पीनस्तन
विमर्दनः नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः अत्र करुणस्य शृंगारोंऽगं प्रेयोऽलंकार एव भावालंका
र उच्यते

श्रवसाच्छिन्नं हस्तमालोक्य तद्वधूनामुक्तिः सपूर्वानुभूतोयं करः यः कांचीसमाकर्षणशीलः नीवीवसनग्रंथिस्त
स्या विस्रंसनो मोचक इति स्मर्यमाणया शृंगारावस्थया करुणरसपरिपोषः ७ ७ ७

कदेति निमिषमिव दिवसान् कदा नेष्यामीत्यन्वयः कीदृशः काश्यां गंगातीरे वसन् अयेइत्यादेरिति क्रोशन्नित्यनेनान्वयः अत्यु
च्चाइति स्फाराः विस्तीर्णाः प्रस्तौमि प्रसंजयामि भुवः पृथिव्याः इमां भुवं बिभ्रत् धारयमाणः त्वत्प्रत्यर्थीति हे वीर संत्रासतोभ

सयथा कदा वाराणस्याममरतटिनीरोधसि वसन्वसानः कौपीनं शिरसि निदधानोंजलिपुटं अयेगौरीनाथत्रिपुरहरशं
भोत्रिनयन प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान् अत्र शांतिरसस्य कदेति पद सूचितचिंताख्यो व्यभिचारि
भावोंगं यथावा अत्युच्चाः परितः स्फुरंति गिरयः स्फारास्तथांभोधयस्तानेतानपि बिभ्रती किमपि न श्रांतासि तुभ्यं नमः
आश्चर्येण मुहुर्मुहुः स्तुतिमिति प्रस्तौमि यावद्भुवस्तावद्बिभ्रदिमां स्मृतस्त्वद्भुजो वाचस्ततो मुद्रिताः अत्र प्रभुविषय
रतिभावस्य वसुमतीविषयरतिभावोंगं ऊर्जस्विद्यथा त्वत्प्रत्यर्थिवसुंधरेश तरुणीः संत्रासतः सत्वरं यातीर्वीरविलुं
ठितुं सरभसं याताः किरातावने तिष्ठंतिस्तिमिताः प्ररूढपुलकास्ते विस्मृतोपक्रमास्तासामुत्तरलैस्तनैरतितरांलोलैरपांगैरपि

याहनेसत्वरं गच्छ तीः तव प्रत्यर्थिनः शत्रवो वसुंधरेशा भूपास्तेषां तरुणीर्विलुंठितुं याताः कीराता भिल्लास्तासां तरुणीनामुत्तरलैरतिचपलैः स्तनैरति
तरामतिशयेन लोलैश्चंचलैरपांगैर्नेत्रप्रांतैश्चतैस्तिमिताः स्तब्धाः प्रोद्गत रोमांचाः विस्मृतउपक्रमो लुंठनरूपो यैस्तादृशास्तिष्ठंतीत्यन्वयः अत्र
शृंगारस्याननुरक्तराजवनिताविषयत्वादनौचित्येन प्रवृत्तिरित्याभासरूपत्वं ९

त्वयीति अजनिष्ट अभूत युधि संग्रामे तद्विषयेति प्रभुविषयाद्विपतृगणस्य यारतिस्तद्रूपइत्यर्थः अत्र शत्रुविषयकत्वरूपानौचि
त्येन प्रवर्त्तितत्वाद्भावास्याभासत्वं पश्यामइति नायकस्य स्वमित्रं प्रति नायिकावृत्तांतोक्तिः मयि तूष्णीभूते किमियं प्रपद्यते कुरुते

अत्र प्रभुविषयरतिभावस्य शृंगाररसाभासांगं यथावा त्वयि लोचनगोचरं गते सफलं जन्म
नृसिंह भूपते अजनिष्ट ममेति सादरं युधि विज्ञापयति द्विषांगणः अत्र कवेः प्रभुविष
यस्य रतिभावस्य तद्विषयद्विषद्गणरतिरूपो भावाभासोंगं समाहितं यथा पश्यामः कि
मियं प्रपद्यत इति स्थैर्यं मयालंबितं किं मानालपतीत्ययं खलु शठः कोपस्तयाप्याश्रितः
इत्यन्योन्यविलक्ष्यदृष्टिचतुरे तस्मिन्नवस्थांतरे सव्याजं हसितं मया धृतिहरो मुक्तस्तुबा
ष्पस्तया अत्र शृंगारस्य कोपशांतिरंगं

तत्पश्यामइत्यभिप्रायेण मया स्थैर्यं मौनरूपमालंबितमंगीकृतं पश्यामइति बहुवचनं सखीसमानाभिप्रायं एवं तयापि अयं खलु शठो
मां किमिति नालपति भाषत इति कोप आश्रितः इत्यन्योन्यं परस्परं विलक्ष्यालक्ष्यरहिता या दृष्टिस्तत्र चतुरे सव्याजं निमित्तांतरव्याजसहितं

तदिति एधि भव निनीषामि नेतुमिच्छामि यतस्त्वैव रूपेण समः समप्रियो नलः पत्रिणा हंसेन पादेन विलिख्य अदर्शि दर्शितः एकेति हे वीरक्षण मात्रेण युद्धप्रस्थानाद्भावी यो विरहक्लेशस्तदसहिष्णुर्लोलाक्षीं दयितां पश्यतस्तथा प्रौढसंग्रामाडंबरमाकर्णयतश्च भवतः एका कपोलस्थली द्राक् उद्गीर्णपुलकैः कुसुमायुधस्य मदनस्येषुधिस्तरुणीमिव प्रव्यक्तापुंखावलीशरपुंखपंक्तिर्यत्र

भावोदयो यथा तदद्य विश्रम्य दयालुरेधि मे दिनं निनीषामि भवद्विलोकिनी अदर्शि पादेन विलिख्य पत्रिणा तवैव रूपेण समः समप्रियः अत्र नलं प्रति दमयंत्या औत्सुक्यरूपभावस्योदयः शृंगाररसस्यांगं भावसंधिर्यथा एकाभूत्कुसुमायुधेषुधिरिव प्रव्यक्तपुंखावली जेतुर्मंगलपालिकेव पुलकैरन्या कपोलस्थली लोलाक्षीं क्षणमात्रभाविविरहक्लेशासहां पश्यतो द्रागाकर्णयतश्च वीर भवतः प्रौढाहवाडंबरं अत्र रमणीप्रेमरणोत्सुक्ययोः संधिः प्रभुविषयभावस्यांगं

तथाभूता भूत् अन्या द्वितीया जेतुर्जयशीलस्य मंगलपालिका मंगलरूपा पालिका या कुशकाशादिनिर्मिता उभयपार्श्वस्यस्तंभद्वक्षादिषु बद्धा मार्गपालीति प्रसिद्धा तद्वद्भूदित्यर्थः अत्र प्रेमपदोक्ताया रतेरपरिपुष्टत्वाद्भावरूपत्वं बोध्यं ७ ७

कार्यमिति शुक्रकन्यां देवयानीं दृष्टवतो राज्ञो ययातेरियमुक्तिः अकार्यं ब्राह्मणकन्यासक्तिः शशलांछनस्य चंद्रस्य कुलं सोमवंशः अयं वितर्कः तदुपमर्द्देन भूयोपीत्यौत्सुक्यं एवमग्रेपि श्रुतं शास्त्रश्रवणमिति मतिः अहो कोपेपीति स्मरणं अपगतकल्मषाः कृते कृतेधीर्येषां ते किं वदिष्यंतीति शंका स्वप्ने पीति दैन्यं हे चेतः स्वास्थ्यमुपेहीति धैर्यं कः खलु धन्यो युवा तरुणः अधरं धास्यति पा

भावशबलं यथा काकार्यं शशलक्ष्मणः क्व च कुलं भूयोपि दृश्येत सा दोषाणां प्रशमाय नः श्रुतमहो कोपेपि कांतं मुखं किं वक्ष्यंत्यपकल्मषाः कृतधियः स्वप्नेपि सा दुर्लभा चेतः स्वास्थ्यमुपेहि कः खलु युवा धन्योधरं धास्यति अत्र वितर्कौत्सुक्यमतिस्मरणशंकादैन्यधृतिचिंतानां शबलता विप्रलंभशृंगारस्यांगं प्रमाणालंकारे प्रत्यक्षं यथा क्रांतकांतवदनप्रतिबिंबे भग्नबालसहकारसुगंधौ स्वादुनि प्रणदितालिनिशीते निर्विवार मधुनींद्रियवर्गः स्यतीति चिंता विप्रलंभो वियोग इति पर्यायौ क्रांतेति इंद्रियाणां वर्गः समूहः मधुनि मद्ये निर्ववार निर्वृतिं प्राप कथंभूते संक्रांतप्रियमुखप्रतिबिंबे भग्नकोमलाम्रपल्लववत्सुगंधौ स्वादुनि आस्वाद्ये प्रकृष्टनादयुक्तभ्रमरयुते शीतस्पर्शे चेति अत्रेंद्रियतृप्त्या तज्जन्यप्रत्यक्षमलंकारः १ १ १

किमिति आरात् दूरे इतिक्षणं संदिह्य कश्चित् बकसहवासिनां कमलानां परोक्षैः रहस्यैर्विब्बोकैर्मा नालियकथालापे विब्बोको नादर क्रियेत्युक्तलक्षणे हावविशेषैर्मुखमिति निश्चिकाय निर्णीतवान् इति प्रत्यक्षं यथेति यथाशब्दा अनुमानार्थाः यथाशब्दस्तु निर्दिष्टस्तुल्य योगानुमानयोरिति विश्वकोशात् तथा चञ्चपलजलदरूपो धूमः व्योम्न आकाशस्य रंध्रमवकाशं यस्मात्स्थगयति यस्माच्च कीट

यथा वा किंतावत्सरसि सरोजमेतदाराद्दाहोस्विन्मुखमवभासते युवत्याः संशय्य क्षणमपि निश्चिकाय कश्चिद्बिब्बोकैर्बकसहवासिनां परोक्षैः पूर्वत्र प्रत्यक्षमात्रमत्र तु विशेषदर्शनजन्यसंशयोत्तर प्रत्यक्षमिति भेदः अनुमाने यथा यथा रंध्रं व्योम्नश्चलजलदधूमः स्थगयति स्फुलिंगानां रूपं दधति च यथा कीटमणयः यथा विद्युज्ज्वालोल्लसितपरिपिंगाश्च ककुभस्तथा मन्ये लग्नः पथिकतरुखंडे स्मरदवः

मणयः खद्योताः स्फुलिंगानां रूपं दधति धारयंति यस्माच्च विद्युद्रूपाभिर्ज्वालाभिरुल्लसिताः प्रकाशीभूताः परितः पिंगवर्णाश्च ककुभो दिशस्तस्मात्पथिकरूपाणां तरूणां खंडे समूहे स्मरलक्षणो दवाग्निर्लग्न इति मन्ये इत्यन्वयः प्रयोगस्तु पथिकतरुखंडं स्मरदावानलवत् व्योमव्यापिजलदधूमवत्त्वादित्यादिर्बोध्यः ॥ ९ ॥

यत्रैताइति लहरीवच्चलाच्चलाश्चंचलादृशो यासांता एताः कामिन्यः यत्रजने भ्रूलतांव्यापारयंति प्रेरयंति तत्रैव भ्रूसंज्ञाविषय एव यद्यस्मादमीमर्मस्पर्शिनो बाणाः सततंपतंति तत्तस्मान्मंडलीकृते चापे पुंखिता योजितमुखायेशरास्तेषु प्रेंखन् चपलःकरो यस्य तादृशः क्रोधनः स्मरः शासनमाज्ञा तद्धारक आसामग्रतो धावतीति सत्यमित्यन्वयः अतिशयोक्तीति मार्गणत्वेन दृशाम

यथावा यत्रैतालहरीचलाचलदृशो व्यापारयंति भ्रुवौ यत्तत्रैव पतंति संततममी मर्म
स्पृशो मार्गणाः तच्चक्रीकृतचापपुंखितशरप्रेंखत्करः क्रोधनो धावत्यग्रत एव शासनधरः स
त्यं तदाऽऽसां स्मरः पूर्वं रूपकसंकीर्णमिदमतिशयोक्तिसंकीर्णमिति भेदः शुद्धानुमानं यथा
निलीयमानैर्विहगैर्निमीलद्भिश्च पंकजैः विकसंत्या च मालत्या गतोऽस्तं ज्ञायते रविः ७

ध्यवसानादिति भावः प्रयोगस्तु एताः चक्रीकृतचापं सदा पुरो धावदाज्ञाकर मदनकाः मर्मभेदि बाणपाताश्रय भ्रूसंज्ञास्थानकत्वादिति बोध्यः एवं निलीयमानैरित्यत्रापि अयं कालः सूर्यास्तमयवान् पक्षिनिलीयमानताद्याश्रयत्वादिति रविरस्तगमनवान् तादृशकालसंबंधित्वादिति वा प्रयोगो ज्ञेयः ७ ७ ७

सौमित्रे इति विरहातुरस्य रामस्य लक्ष्मणं प्रत्युक्तिः अत्राप्ययंचंद्रः कुरंगधारित्वादिप्रयोगः इत्यनुमानं तामिति तारकाणां न्यासः संनिवेशः शकटस्याकरं संस्थानंआश्रितस्तां रोहिणीं विजानीहीत्यतिदेशवाक्यार्थज्ञानमिहोपमानं इयं शकटाकारनक्षत्रव्यक्तिः रोहिणीपदवाच्येत्युपमितिप्रतिकरणत्वात् अत्रेति अत्र एषु राजसु मध्ये मन्मथमिवातिसुंदरं महीपतिं वें

यथावा सौमित्रेननु संव्यतां तरुतलं चंडांशुरुज्जृंभते चंडांशो निशिका कथा रघुपते चंद्रोऽयमुन्मीलति वत्सैतद्विदितं कथं नु भवता धत्ते कुरंगं यतः क्वासि प्रेयसि हा कुरंगनयने चंद्राननेजानकि उपमानं यथा तां रोहिणीं विजानीहि ज्योतिषामत्र मंडले यस्तन्वि तारकान्यासः शकटाकारमाश्रितः अत्र मन्मथमिवातिसुंदरं दानवारिमिव दिव्यतेजसं शैलराजमिव धैर्यशालिनं वेद्मि वेंकटपतिं महीपतिं. पूर्वोदाहरणे उपमानभूतमतिदेशवाक्यं दर्शितं अत्रातिदेशवाक्यार्थसादृश्यप्रत्यक्षरूपमुपमानं फलेनसह दर्शितमिति विशेषः शब्दप्रमाणप्रभा

कटपति संज्ञं वेद्मीत्याद्यन्वयः दानवारिर्विष्णुः शैलराजं हरं धैर्यशालिनं मदनशासकत्वात् प्रत्यक्षरूपमिति सादृश्यविशिष्टपिंडप्रत्यक्षस्यापि फलायोगव्यवच्छिन्नत्वेन करणत्वादिति भावः फलेन उपमितिरूपेण इत्युपमानं ७

विदृण्वतेति कुमारसंभवेबटुवेषंहरंप्रतिपार्वत्याइयमुक्तिः वरदोषंप्रकाशयतापि स्खलितांतःकरणेनत्वयाईशंमहादेवंप्रति
एकंअलक्ष्यजन्मत्वंसाधूक्तं यतोयमीशमात्मभुवोब्रह्मणोपिकारणमामनंतिवेदाः सकथंलक्ष्यःप्रभवउत्पत्तिस्थानेयस्यताहक्‌भ
विष्यतीत्यन्वयः विवक्षतेतिक्वचित्पाठःवक्तुमिच्छतितदर्थः बलादिति नास्तिकोक्तिरियं हेजनाःपापानिबलात्कुरुत तानित्वपा

विदृण्वतादोषमपिच्युतात्मनात्वयैकमीशंप्रतिसाधुभाषितं यमामनंत्यात्मभुवोपिकारणंकथंसलक्ष्यप्रभवो
भविष्यति अत्रशिवःपरमेष्ठिनोपिकारणमित्यत्रश्रुतिरूपंशब्दप्रमाणमुपन्यस्तं एवंस्मृतिपुराणागमलौ
किकवाक्यरूपाण्यपिशब्दप्रमाणान्युदाहरणीयानि तत्रस्मृतिर्यथा बलात्कुरुतपापानिसंतुतान्यकृतानि
वः सर्वान्बलकृतानर्थानकृतान्मनुरब्रवीत् पूर्वश्रुतिरभिमतार्थप्रमाणत्वेनोपन्यस्ता इहतुस्मृतिरनभिम
तार्थेतद्दूषणपरेणप्रमाणतयानीतेतिभेदः आचारात्मतु द्वयोरपिमीमांसकोक्तधर्मप्रमाणयोर्वेदशब्दानुमा
पकतयाशब्दप्रमाणएवांतर्भावः पानिवोयुष्माकंअकृतान्येव भवंतु यतोबलात्कारेणकृतान्सर्वानर्थान्मनुरकृतानब्रवीदि
त्यन्वयः तद्दूषणपरेण सर्वाभिमतार्थदूषणपरेण आत्मनस्तुष्टिःप्रीतिर्वैकल्पिकेविषयेगर्भाष्टमेऽष्टमेवाब्देब्राह्मणस्योपनयनमित्या
दौप्रमाणमित्युक्तं

महाजनेति दमयंतींप्रतिनलस्योक्तिः नामवितर्के नाददतेनगृण्हंति आचारमुच्च आचारत्यागिनं विगायति निंदंति असंशयंभाति
क्षत्रेण क्षत्रियेणपरियहं क्षमा योग्याः यत आर्यश्रेष्ठंममनोयस्यांशाकुंतलायामभिलाषशीलं पदेषु विषयेषु त्वंहीति वरमु
द्रिकां वरदमुद्रां नाधत्से नधास्यसि श्रुतिर्वरदसंज्ञारूपालिंगंगमकंपक्षे श्रुत्यानृतीयादिरूपया प्रकर्षेणशीघ्रंसिद्धेअर्थे

तत्राचारप्रमाणंयथा महाजनाचारपरंपरेदृशीम्वनामनामाददतेनसाधकः अतोभिधातुंनतदुत्सहेपुनर्जनःकि
लाचारमुच्चंविगायति आत्मतुष्टिप्रमाणंयथा असंशयंक्षत्रपरिग्रहक्षमायदार्यमस्यामभिलाषितेमनः
सतांहिसंदेहपदेषुवस्तुषुप्रमाणमंतःकरणस्यवृत्तयः अत्रदुष्यंतेनात्मतुष्ट्याशाकुंतलापरिग्रहस्यधर्म्यत्वं
श्रुत्यनुमतमनुमीयते एवंश्रुतिलिंगादिकमपिमीमांसोक्तंप्रमाणंसंभवदिहोदाहर्तव्यं तत्रश्रुतिर्यथा त्वंहिना
म्नैववरदोनाधत्सेवरमुद्रिकां नहिश्रुतिप्रसिद्धार्थेलिंगमाद्रियतेबुधैः अत्रकरिगिरीश्वरस्यवरदइत्यभिधा
नश्रुत्यासर्वाभिलषितंदातृत्वंसमर्थितं

अंगांगिभावेसतिलिंगमर्थप्रकाशनसामर्थ्यरूपमाद्रियते यथैंद्र्यागार्हपत्यमुप
तिष्ठतइतिश्रुत्यागार्हपत्योपस्थानेविनियुक्तस्यमंत्रस्यैंद्रप्रकाशनसामर्थ्यरूपेणलिंगेनेंद्रोपस्थानेविनियोगोनाद्रियतेइत्यर्थः करि
गिरीश्वरः कालहस्तीश्वरः

विदितमिति इत्थंभूतः परार्थैकप्रवृत्तिकः अत इत्यस्य चेष्टारूपं प्रमाणांतरं नाशंकनीयमित्यग्रेतनेनान्वयः लोलेति गुरूणां संनि
धावपिद्वाभ्यां नायकाभ्यां समयोचितो विधिर्नोत्सृष्टः यथा लोल भ्रूलतया नायिकया विपक्षस्य सपत्न्यादेर्दिशा उपन्यासे ततस्तकाशा

लिंगं यथा विदितं वो यथा स्वार्थानपेक्षाः प्रवृत्तयः ननु मूर्तिभिरष्टाभिरित्थंभूतोस्मि सूचितः अत्र शिवस्य
श्रुतिप्रसिद्ध सर्वोपकारक पृथिव्याद्यष्टमूर्तिपरिग्रह लिंगेन तत्प्रवृत्तीनां लोकानुग्रहैकप्रयोजनत्वं सम
र्थितं लिंगस्य मूलभूतवेदानुमापकतया वैदिकशब्दप्रमाण एवांतर्भावः एवं लौकिकलिंगानामपि लौकि
कशब्दोन्नायकतया लौकिकशब्दप्रमाण एवांतर्भावः अतः लोलद्भ्रूलतया विपक्षदिगुपन्यासे विधूतं शि
रस्तद्वृत्तांतपरीक्षणे कृतनमस्कारो विलक्ष्यः स्थितः ईषत्ताम्रकपोलकांतिनि मुखे दृष्ट्यानतः पादयोरुत्सृ
ष्टा गुरुसंनिधावपि विधिर्द्वाभ्यां न कालोचितः इत्यादि चेष्टारूपं प्रमाणांतरं नाशंकनीयं

दागतोसीति सूचनेकृ
ते नायकेन नेति सूचनाय शिरो विधूतं संचालितं ततस्तद्वृत्तांतपरीक्षणे नायिकया कृते सत्यकृतनमस्कारः विलक्ष्य एवास्थितः ततईष
त्ताम्रा कपोलकांतिर्यस्य तादृशे नायिकाया मुखे कोपातिशयाज्जाते सति तत्पादयोर्दृष्टिपातेनैवानतः प्रणत इति १ १

किमसुभिरिति व्याख्यातंप्राक् तथेति नलमुखचंद्रविषयत्वव्याख्यातुः स्मरस्येत्यर्थः तच्चासिद्धत्वात्कल्पितमितिभावः इतिश ब्दः निर्णेतुमिति अस्तीतिनिर्णेतुंशक्यमित्यन्वयः व्यक्तमिति हेतुस्तर्कः यदिव्यक्तंप्रकटंबलीयान्तदासाजान्हवीजलधिंना

कचिच्छब्दप्रमाणकल्पनयाचमत्कारोयथा किमसुभिर्ग्लपितैर्जडमन्यसेमयिनिमज्जतु
भीमसुतामनः ममकिलश्रुतिमाहतदर्थिकांनलमुखेंदुपरांविबुधःस्मरः अत्रम्रियमाणा
नांमनश्चंद्रंप्रविशतीत्येतदर्थिकायाःश्रुतेर्नलमुखचंद्रविषयत्वेकल्पितेतथाव्याख्यातृस्मरवा
क्यंप्रमाणतयोपन्यस्तं अर्थापत्तिर्यथा निर्णेतुंशक्यमस्तीतिमध्यंतवनितंबिनि अन्यथा
नोपपद्येतपयोधरभरस्थितिः यथावा व्यक्तंबलीयान्यदिहेतुरागमादपूरयत्साजल
धिंनजान्हवी गंगौघनिर्भर्त्सितशंभुकंधरासवर्णमर्णःकथमन्यथास्यात् १ १

पूरयत् अन्यथापूरणेसतिअर्णःसमुद्रस्यजलं गंगौघैर्निभर्त्सितंतिरस्कृतंसत्शंभुकंठसमानवर्णनीलंकथंस्यादित्यन्व यः इत्यर्थापत्तिः १ १ १ १ १

स्फुटमिति· हे तान्वितर्कयंत स्तर्कशीला अपिलोकास्तदवलग्नं अनुपलभमाना अपश्यंतस्तवावलग्नं मध्यमसदिति स्फुटमेवनिश्चि न्वते कुलपर्वतश्रेष्ठयुग्मत्वेनाध्यवसितंस्तनद्वंद्वमाधारं विनायदास्तेतत्त्विह मकरध्वजस्येंद्रजालंमायाचरितंप्रतीमइत्यन्वयः इत्यनुपलब्धिः अभूतेति इश्वरंप्रतिभक्तस्योक्तिः पूर्वमभूतं अभूतपूर्वंतादृशं ममकिंवाभाविनकिंचित् सर्वशीनानपादिद्वंद्वं

अनुपलब्धिर्यथा स्फुटमसदवलग्नंतन्विनिश्चिन्वतेतेतदनुपलभमानास्तर्कयंतोपिलोकाः कुचगिरि
वरयुग्मंयद्विनाधारमास्तेतदिहमकरकेतोरिंद्रजालंप्रतीमः संभवोयथा अभूतपूर्वममभाविकिं
वासर्वंसहेमेसहजंहिदुःखं किंतुत्वदग्रेशरणागतानांपराभवोनाथनतेनुरूपः ७, ७,

सहे हियतोममसहजमेवदुःखमस्ति किंतुहेनाथनेतवशरणागतानांभक्तानांत्वदग्रेपराभवोनानुरूपोनोचितइत्यन्वयः अथ वातवनानुरूपइत्यन्वयः अत्रदुःखादेः संभवाख्यप्रमाणसिद्धस्यकथनं ७ ७ ७,

येनामेति भवभूतेरुक्तिः नामेतिकुत्सने नामप्रकाश्यसंभाव्यक्रोधापगमकुत्सनइत्यमरः किमपीतिकाकुः नकिमपीत्यर्थः एषःकाव्यनिर्माणरूपः ममकोपिसमानधर्मासहृदयोयउत्पत्स्यते अस्तिवातंप्रतियत्नः हियस्मान्निरवधिरयंकालःपृथ्वीचविपुलेतिक्रमेणयोज्यं अत्रकालोह्ययमित्यादिनासोपपत्तिकंसंभवाख्यप्रमाणमुपदर्शितं भ्रातरिति पथिकंप्रतिग्रामस्थस्यप्रश्नः

यथावा येनाम केचिदिहनःप्रथयंत्यवज्ञां जानंतितेकिमपितान्प्रतिनैषयत्नः उत्पत्स्यतेस्तिममकोपि
समानधर्माकालोह्ययंनिरवधिर्विपुलाचपृथ्वी यथावा भ्रातःपांथकुतोभवान्नगरतो वार्त्तानवावर्त्त
नेबाढंब्रूहियुवापयोदसमयेत्यक्ताप्रियांजीवति सत्यंजीवतिजीवतीतिकथितावार्त्तामयापिश्रुता
विस्तीर्णापृथिवीजनोपिविविधः किंकिंनसंभाव्यते अत्राद्योदाहरणेअभूतपूर्वममभाविकिंवति
संभवप्रमाणसिद्धोर्थोदर्शितः १ २ ३

कुतइत्यनंतरमागतइतिशेषः नगरादित्युत्तरं वार्त्तेतिपुनःपूर्वस्यप्रश्नः बाढमित्युत्तरंअंगीकारे अस्तीत्यर्थः ब्रूहीतिपूर्वस्योक्तिः युवेत्यादिपांथवचनं सत्यंजीवतीतिपुनःपूर्वस्यप्रश्नः जीवतीत्यादिसर्वपांथवचनं इतिसंभवः १ २

अनिर्दिष्टप्रवक्तृकेति अनिर्दिष्टो विशेषतोनुक्तः प्रवक्ता यस्येत्यर्थः एवंचैतद्वेति ह्यलक्षणमिति दर्शितं इत्यलंकारचंद्रिकायां प्रमा
णालंकारप्रकरणं संपूर्णं यथासंभवमिति संसृष्टिसंकराभ्यां द्वयोस्तदधिकानां वेति यथासंभवमित्यर्थः स्फुटेति स्फुटमवगम्य

द्वितीयोदाहरणे संभवोपपादकं कालानेत्यादिकमपि दर्शितं तृतीयोदाहरणे तु संभवोपि कंठोक्त इति
भेदः ऐतिह्यं यथा कल्याणी बत गाथेयं लौकिकी प्रतिभाति मे एति जीवंतमानंदो नरं वर्षशतादपि अ
त्र लौकिकी गाथेयमित्यनिर्दिष्टप्रवक्तृकप्रवादपारंपर्यरूपता दर्शिता अथैतेषामलंकाराणां यथासं
भवं क्वचिन्मेलने लौकिकालंकाराणां मेलन इव चारुत्वातिशयोपलंभान्नरसिंहन्यायेन पृथगलंकारा
वस्थितौ तन्निर्णयः क्रियते तत्र तिलतंडुलन्यायेन स्फुटावगम्यभेदालंकारमेलने संसृष्टिः नीरक्षी
रन्यायेनास्फुटभेदालंकारमेलने संकरः सचांगांगिभावेन समप्राधान्येन संदेहेन एकवाचकानु
प्रवेशेन चतुर्विधः एवं नृसिंहाकाराः पंचालंकाराः

मानो भेदो येषामिति विग्रहः एकस्मिन् वाचके नुप्रवेशाःवस्थितिः एतत्सर्वमुदाहरणे व्यक्तीभविष्यति ९ ९

कुसुमेति माघे ऋतुवर्णने पद्यमिदं अन्यया कयापि वनितया चलितया कलस्वरो मेखलायाः काञ्च्याः कलकलः कोलाहलो विदधे किंभूतया कुसुमसौरभलोभेन परिभ्रमतां भ्रमराणां संभ्रमेण त्वराविशेषेण संभृता सम्मृद्धा शोभा यस्यास्तया अलकालोलायस्यां तादृशी दृक् यस्यास्तथाभूतयेति आनंदेति आनंदेन मंथरं यथा स्यात्तथा पुरंदरेणेंद्रेण मुक्तमर्पितं माल्यं यत्र तादृशं

तत्र संसृष्टिर्यथा कुसुमसौरभलोभपरिभ्रमद्भ्रमरसंभ्रमसंभृतशोभया चलितया विदधे कलमेखलाकलकलोलकलोलदृशान्यया अत्र शब्दालंकारानुप्रासयमकयोः संसृष्टिः लिंपतीव तमोंगानि वर्षतीवांजनं नभः असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता अत्रोत्प्रेक्षयोरुपमायाश्चेत्यर्थालंकाराणां संसृष्टिः आनंदमंथरपुरंदरमुक्तमाल्यं मौलौ हठेन निहितं महिषासुरस्य पादांबुजं भवतु मे विजयाय मंजुमंजीरसिंजितमनोहरमंबिकायाः अत्र शब्दार्थलंकारयोरनुप्रासोपमयोः संसृष्टिः

महिषासुरस्य मौलौ मस्तके हठेन निहितं मंजु मनोज्ञं मंजीरस्य नूपुरस्य सिंजितं रणितं यत्र तादृशमनोरममंबिकायाः पादांबुजमंबुजसदृशं चरणं नोऽस्माकं विजयाय भवत्वित्यन्वयः अत्र पादांबुजमित्युपमितसमास एव न तु मयूरव्यंसकादिवत्पाद एवांबुजमिति तथा सत्यंबुजप्राधान्ये मंजीरसिंजितान्वयायोगादित्युपमैव न रूपकमिति ज्ञेयं इति संसृष्टिः

तलेषिति तदा मारुतकंपितानां महीरुहाणां तलेषुछाया अवेपंत कंपमाना आसन् तत्रोल्लेक्षते शशाकरूपेण सिंहेन छिन्नाकृतीनां तमोलक्षणगजानां शरीरखंडा इवेति गुणानांचेति तार्त्तीयाधिकरणसूत्रं अस्यार्थः गुणानां गुणभूतानां पदार्थानां परार्थत्वात्

अंगांगिभावसंकरो यथा तलेष्ववेपंत महीरुहाणां छायास्तदा मारुतकंपितानां शशांकसिंहेन तमोगजानां लूनाकृतीनामिव गात्रखंडाः अत्र शशांकसिंहेनेति तमोगजानामिति च रूपकं यद्यप्यत्र शशांक एव सिंहस्तमांस्येव गजा इति मयूरव्यंसकादिसमासाश्रयणेन रूपकवत् शशांकः सिंह इव तमांसि गजा इवेत्युपमितसमासाश्रयणेनोपमापि वक्तुं शक्या तथापि लूनाकृतीनामिति विशेषणानुगुण्याद्रूपकसिद्धिः तस्य हि विशेषणस्य प्रधानेन सहान्वयेन भाव्यं न तु गुणेन गुणानां च परार्थत्वादसंबंधः समत्वात्स्यादिति न्यायात् उपमितसमासाश्रयणे तस्य पूर्वपदार्थप्रधानत्वात् शशांकस्य तमसां च प्राधान्यं भवेत् तत्र न विशेषणमुख्यार्थान्वयस्वारस्यमस्ति मुख्यप्रधानार्थत्वात् पर

स्परमसंबंधः कुतः समत्वात् अप्रधानत्वसाम्यादिति यथा भाष्यकारमते पावमानेष्टीनामाधानस्य चाहवनीयाद्यर्थत्वात् परस्परं नांगांगिभावसंबंधः यथा वार्त्तिककारमते ऽग्निस्मामिंधनार्थानां मंत्रविशेषरूपाणां निविदां सामधेनीनां चेति संक्षेपः एतदधिकरणपूर्वपक्षमिद्धांतौ प्रकृतानुपयोगान्नेदर्शितौ

स्वरूपनाशेति स्वरूपनाशरूपमुपचरितं गौणं यदाकृतिलवनमित्यर्थः नन्वेवमपि तमोंशेः स्यविशेषणस्यान्वयात्कथं रूपक सिद्धिरित्याशंक्याह स्वरूपेति क्रोडीकारेणनिगरणेन लक्षणामूलेति साध्यवसानलक्षणामूलेत्यर्थः तथाच तमोंशेऽपचा

स्वरूपनाशरूपोपचरिताकृतिलवनकर्तृत्वकर्मत्वान्वयसंभवेपिमुख्यार्थान्वयस्वारस्यमेवादरणीयं स्वरूपनाशक्रोडीकरणप्रवृत्तयालक्षणामूलातिशयोक्त्यारूपकसिद्धिः तत्ररूपकमुत्प्रेक्षायाअंगं तदुत्थापकत्वात् रूपकभावेहिछायाल्लूनगात्रखंडाइवावेपंतेत्येतावदुक्तावुपमेवसिद्ध्येत् वेपनादि साधर्म्याच्छायानांसद्यःकृतगात्रखंडतादात्म्यसंभावनारूपोत्प्रेक्षा

रेणान्वयइतिभावः नचैवंसत्युपमांगीकारेपि किंबाधकमितिवाच्यं तदंगीकारेप्रधानान्वयेप्युपचाराश्रयणापत्तेः तदपेक्षयाःप्रधानेतमोंशेतदंगीकारेणरूपकस्यैवौचित्यादिति नछायानामिति सिद्ध्येदित्यनुवर्त्तते उत्प्रेक्षानसिद्ध्येदित्यन्वयः इवशब्दस्यसादृश्येप्रसिद्धतरत्वेनासतितात्पर्यग्राहकेसंभावनाबोध कत्वासंभवादितिभावः

रूपकं विनाप्युत्प्रेक्षायां तात्पर्यग्राहकमस्तीति शंकते नन्विति एवमुक्तौ तमोगजानामित्युक्तौ तथा च साधकांतरस्य साधकांतराद्दूषकत्वाद्रूपकस्योल्लेखांगत्वमविद्दितमिति भावः अवत्विति सवितुः सूर्यस्य तुरगावली अश्वपंक्तिर्नोऽस्मानवतु केव नभःश्रियः गगनलक्ष्म्याः मरकतमणीनामेकलता एकावली वेत्युत्प्रेक्षा सूर्यतुरंगाणां हरितवर्णत्वात् कथंभूता सम्यगतिलंघितास्तुंगा उच्चाः प

ननु शशांकेत्यत्र नाकृतीनां तमसो गात्रखंडा इवावेपंते त्येतावदुक्तावपि सिद्ध्यत्युत्प्रेक्षा तादात्म्यसंभावनोपयुक्तलूनाकृतित्वरूपाधिकविशेषणोपादानात् सत्यं तथोक्तावाकृतिलवनादिधर्मरूपकार्यसमारोपनिर्मिता शशांकतमसोर्हंतृहंतव्यचेतनवृत्तांतसमारोपरूपा समासोक्तिरपेक्षणीया एवमुक्तौ रूपकमिति विशेषः एवमत्रातिशयोक्तिरूपकोल्लेखानामंगांगिभावेन संकरः समप्राधान्यसंकरो यथा

अवतु नः सवितुस्तुरगावली समतिलंघिततुंगपयोधरा स्फुरितमध्यगतारुणनायका मरकतैकलतेव नभःश्रियः

योधरा मेघा यया एकावलीपक्षे पयोधरौ स्तनौ तथा स्फुरितो दीप्तिमान्मध्यगतः अरुणरूपो नायको नेता सारथिर्यस्याः सा पक्षे अरुणः आरक्तः नायको हारमध्यमणिः नायको नेतरि श्रेष्ठहारमध्यमणावपीति विश्वः ७ ७

अतिशयोक्त्या मेघानां स्तनत्वेनाध्यवसानरूपया गर्भैवेत्यनेन तिलतंडुलन्यायेन स्फुटावगम्यमानभेदायाः संसृष्टेः सकाशाद्वैल क्षण्यं दर्शितं एवमत्रेति एकस्य चमत्कृतिजनने परापेक्षत्वादंगांगिभावमाशंक्याह परस्परेति अंगुलीभिरिति शशीअंगुलीभि

अत्र पयोधरादिशब्दश्लेषमूलातिशयोक्त्यंगभूतयोत्थाप्यमाने वसवितृतुरगावल्यां मरकतैकावलीतादात्म्योत्प्रेक्षा न मौलक्ष्म्यां नायिकाव्यवहारसमारोपरूपसमासोक्तिगर्भैवोत्थाप्यते पयोधरश्लेषस्योभयोपकारकत्वात् तत उत्प्रेक्षासमासोक्त्योरेकःकालः परस्परापेक्षया चारुलसमुन्मेषश्चोभयोस्तुल्य इति विनिगमनाविरहात्समप्राधान्यं यथावा अंगुलीभिरिव केशसंचयं सन्निकृष्य तिमिरं मरीचिभिः कुड्मलीकृतसरोजलोचनं चुंबतीव रजनीमुखं शशी अत्रांगुलीभिरिति वाक्योक्तोपमया तत्प्रायपाठान्मुख्यकुड्मलीकरणलिंगानुगुण्याच्च उपमितिसमासाश्रयणेन लब्धया सरोजलोचनमिति समासोक्तोपमयांगभूतयोत्थाप्यमाने व शशिकर्तृकनिशामुखचुंबनोत्प्रेक्षा निशाशशिनोर्दांपत्यव्यवहारसमारोपरूपसमासोक्तिगर्भैवोत्थाप्यते रिवमरीचिभिः केशसंचयमिव तिमिरं संनिगृह्य कुड्मलीकृतसरोजलोचनं लोचनमिव सरोजं यत्र तादृशं रजनीमुखं चुंबतीवेत्यन्वयः तत्प्रायेति उपमाबहुलेसंदर्भे पाठादित्यर्थः मुख्येति मुख्यार्थरूपं यत्कुड्मलीकरणरूपं लिंगं पुष्पासाधारणधर्मस्तस्यानुकूल्यादित्यर्थः ७

उत्थापकत्वाविशेषत्वात् अंगत्वाविशेषात् चंद्रस्यचुंबनोत्प्रेक्षायांदांपत्यव्यवहारसमारोपात्मकसमासोक्तौ चापेक्षितस्यनायकसाध र्म्यस्योक्तोपमाभ्यामसमर्पणात्कथंतयोस्तदंगत्वमितिशंकते यद्यपीति. मरीचिरिवेतिमरीचिभिरिवांगुलीभिस्तिमिरमिवकेशसंचय

उपमयोरुभयत्रोत्थापकत्वाविशेषात् समासोक्तिगर्भतांविनाचुंबनोत्प्रेक्षायानिरालंबनत्वाच्च ततश्चात्राप्यु त्प्रेक्षासमासोक्त्योरेककालयोः समप्राधान्यं यद्यप्यत्रोपमाभ्यांशशिनिशागताववधर्मौसमर्थ्येते नतुशशि नायकयोर्निशानायिकयोश्चसाधारणधर्मौ साधारणधर्मसमर्पणंचोत्प्रेक्षासमासोक्त्योरपेक्षितं उत्प्रेक्षायाः प्रकृताप्रकृतसाधारणगुणक्रियानिमित्तसापेक्षत्वात् समासोक्तेर्विशेषणसाम्यमूलकत्वाच्च तथापिवाक्यो क्तोपमायामिवकारस्यमरीचिभिरिवेत्यन्वयांतरमभ्युपगम्यान्वयभेदलब्धप्रकृताप्रकृतयोरेकैकविषयस्या र्थद्वयस्यसमासोक्तोपमायांसरोजसदृशंलोचनमितिसमासांतरमभ्युपगम्यसमासभेदलब्धार्थद्वयस्य चाभेदाध्यवसायेनसाधारण्यंसंपाद्यतयोरुत्प्रेक्षासमासोक्त्यारंगतानिर्वाह्या छ छ

मित्येवंरूपमित्यर्थः एकैकविषयस्यार्थद्वयस्याभेदाध्यवसानेनेत्यन्वयः तयोःवाक्यसमासोक्तोपमयोः छ छ छ

आवश्यकाभेदाध्यवसायेनोपपन्नीकृतमन्वयांतरसमासांतरकल्पनागौरवेणेत्याशयेनाहयद्वेति तनुदीर्घेत्यादौ पूर्वनिपातनियमा नुरोधेन यथासंख्यक्रमपरित्यागः तथा चांगुलिमरीच्योस्तनुत्वनीरंध्रत्वाभ्यां तिमिरकेशसंचययोरावरणरूपत्वनीलत्वाभ्यां सरो जलोचनयोर्दीर्घत्वकांतिमत्वाभ्यां च साहश्यं बोध्यं प्रातिस्विकरूपेण अंगुलित्वमरीचित्वादिना अनुगतेति अनुगतं यत्साहृ

यद्वा इह प्रकृतकोटिगतानां मरीचितिमिरसरोजानामप्रकृतकोटिगतानां चांगुलीकेशसंचयलोचनानां च तनुदीर्घावरणत्वनीलनीरंध्रत्वकांतिमत्वादिना सदृशानां प्रातिस्विकरूपेण भेदवदनुगतसादृश्य प्रयोजकरूपेणाभेदोप्यस्ति स चात्र विवक्षित एव भेदाभेदोभयप्रधानोपमेत्यालंकारिकसिद्धांतात् त त्र च प्रयोजकांशनिष्कर्षन्यायेनाभेदगर्भतांशोपजीवनेन साधारण्यं संपाद्य प्रधानभूतोत्प्रेक्षा समासो त्त्यं गता निर्वाह्या श्यप्रयोजकं रूपं तनुत्वादिकं तेनेत्यर्थः एतच्च सादृश्यमतिरिक्तमित्यभिप्रायेण सिद्धांतादिति त दुक्तं साधर्म्यं त्रिविधं भेदप्रधानमभेदप्रधानं भेदाभेदप्रधानं चेत्युपक्रम्य विद्यानाथेन उपमानन्वयोपमेयोपमास्मरणानां भेदाभेदसाधारणसाधर्म्यमूलत्वमिति ७ ९ ७

ननु भेदाभेदरूपांशद्वयोपेतायाउपमायाभेदांशस्यानुपयोगात्कथंतस्याउत्प्रेक्षाद्युपयोगित्वमित्याशंक्यपरिहरति नहीति प्रकाश
श्च शीतापनयनंचेतिद्वंद्वः शीतालुः शीतार्त्तः शीतोष्णतृष्णाभ्यस्तदसहंनइतिवालुः उक्तसिद्धांतस्यनिर्युक्तिकत्वेनाश्रद्धेयत्वमाशंकमा

नहिप्रकाशशीतापनयनशक्तिमतः सौरतेजसः शीतापनयनशक्तिमात्रेणशीतालूपयोगितानदृष्टा एवमनभ्यु
पगमेच पांड्योयमंसार्पितलंबहारःकृप्तांगरागोहरिचंदनेन आभातिबालातपरक्तसानुःसनिर्झरोद्गारइवाद्रिराजः
इत्याद्युपमापिननिर्वहेत् नह्यत्राद्रिराजपांड्ययोरुपमानोपमेययोरनुगतःसाधारणधर्मोनिर्दिष्टः एकत्रबालातप
निर्झरावन्यत्रहरिचंदनहाराविति धर्मभेदात् तस्मात्तत्रातपहरिचंदनयोर्निर्झरहारयोश्चसदृशयोरभेदांशोपजीवन
मेवगतिः

नंप्रत्याह एवमिति पांड्योर्यमिति पांड्यनामाअयं नृपः अद्रिराजइवाभाति कथंभूतः अंसयोरर्पितोलंबोहारोयेनसः तथाहरिचंदनेनरक्तचंदनेनकृप्तः
कृतअंगरागोनुलेपनंयेनतथाभूतः अद्रिराजःकीदृक् बालातपेनरक्तानिसानूनिप्रस्थानियस्यसः तथानिर्झरस्योद्गारेणोद्गमेनसहितः

पिनष्टीति व्याख्यातं प्राक् पौर्वापर्येणेति तथाच चमत्कारप्रयोजकपौर्वापर्यघटकत्वेन भेदानवभासात्संसृष्टिवैलक्षण्यमिति भावः दर्शादि
वद्दर्शपौर्णमासादिवत् अयं च भिन्नकालीनयोरपि समप्राधान्ये दृष्टांतः फलं तत्र स्वर्गः प्रकृते तु चमत्कृतिविशेषः शशिनमिति तत्र अजस्येंदुमत्या स्वयंवरे समगु

पिनष्टीव तरंगाग्रैः समुद्रः फेनचंदनं तदादाय करैरिंदुर्लिंपतीव दिगंगना इत्यत्रोत्प्रेक्षयोः कालभेदेपि समप्राधान्यं अ
न्योन्यनिरपेक्षवाक्यद्वयोपात्तत्वात् तदादायेति फेनचंदनरूपकमात्रोपजीवनेन पूर्वोत्प्रेक्षानपेक्षणात् नचैवं लिंपतीव त
मोंगानीतिवदुत्प्रेक्षाद्वयस्य संसृष्टिरेवेयमिति वाच्यं लौकिकसिद्धपेषणलेपनपौर्वापर्यच्छायानुकारिणोत्प्रेक्षाद्वयपौर्वाप
र्येण चारुतातिशयसमुन्मेषतः संसृष्टिवैषम्यात् तस्माद्दर्शादिवदेकफलसाधनतया समप्रधानमिदमुत्प्रेक्षाद्वयं एवं सम
प्रधानसंकरोपि व्याख्यातः संदेहसंकरो यथा शशिनमुपगतेयं कौमुदी मेघमुक्तं जलनिधिमनुरूपं जह्नुकन्यावतीर्णा इ
ति समगुणयोगप्रीतयस्तत्र पौराः श्रवणकटु नृपाणामेकवाक्यं विवव्रुः अत्र इयमिति सर्वनाम्नाय धर्जवृतवतींदुमती वि
शिष्टरूपेण निर्दिश्यते तदा बिंबप्रतिबिंबभावापन्नधर्मविशिष्टयोः सदृशयोरैक्यारोपरूपा निदर्शना

णयो रजेंदुमत्योर्योगेन प्रीतिर्येषां ते पौरा नागरिका नृपाणामन्येषां श्रवणयोः कटु पीडाकरं इति पूर्वार्द्धरूपं एकमेव वाक्यं विवव्रुः उच्चारयामासुरित्यन्वय

तेन सर्वनाम्ना साइंदुमती बिंबभूतो धर्मः अजकर्मकं वरणं तत्र तस्मिन्पक्षे विलीयेति अग्निसंयोगेन घृतादिवत्केनापि हेतुना विलीनतांप्रा

यदि तेन सा स्वरूपेणैव निर्दिश्यते बिंबभूतो धर्मस्तु पूर्वं प्रस्तावात्समगुणयोगप्रीतश्च इति पौरविशेषणाच्चा
वगम्यते तत्र प्रस्तुतधर्मिणि तद्वृत्तांत प्रतिबिंबभूता प्रस्तुतवृत्तांतारोपरूपं ललितमित्यनध्यवसायात्संदेहः वि
लीयेंदुः साक्षाद्मृतरसवापी यदि भवेत्कलंकस्तत्र्यौ यदि च विकचेंदीवरवनं ततः स्नानक्रीडाजनितजडभावै
रवयवैः कदाचिन्मुंचेयं मदनशिखिपीडापरिभवं अत्र यद्येतावत्साधनं संपद्येत तदा तापः शाम्यतीत्यर्थे कविसं
रंभश्चेत्तदैतदुपात्तसिद्ध्यर्थमूह इति संभावनालंकारः एतावत्साधनं कदापि न संभवत्येवातस्तापशांतिरपि ग
गनकुसुमकल्पेत्यर्थे कविसंरंभश्चेदुपात्तमिथ्यात्वसिध्यर्थं मिथ्यांतरकल्पनारूपा मिथ्याध्यवसितिरित्युभयथा
संभवात्संदेहः एवं सिक्तस्फटिककुंभांतः स्थितिश्वेतीकृतैर्जलैः मौक्तिकं चेल्लतासूते तत्पुष्पैस्ते समं यशः इ
त्यादिष्वपि संभावना मिथ्याध्यवसितिसंदेहसंकरोद्रष्टव्यः प्येत्यर्थः विकचं विकसितं जडभावः शैत्यं मदन एव शिखी

वांके: संरंभस्तात्पर्यमिक्तमिति स्फटिककुंभांतः स्थित्या श्वेतीकृतैर्जलैः सिक्तं मौक्तिकमित्यन्वयः ७ ७ ५

 मुखेनेति संदोहः समूहः लक्षयित्वेति स्फुटमेकत्रविषयेशब्दार्थालंकृतिद्वयमितिसूत्रेणेत्यर्थः स्पष्टेति अथोऽनंतरं दिवसरूपमर 
विंदं कमलं संचुकोच संकोचमगमत् कीदृक् स्पष्टमुच्छ्रु संतउल्ल संतः किरणाएव केसराणियस्यास्तथाभूता सूर्यबिंबरूपाविस्तीर्णा

मुखेनगरलंमुंचन्मूलेवसतिचेत्फणी फलसंदोहगुरुणातरुणाकिंप्रयोजनं अत्रमहोरगवृत्तांतेवर्ण्यमाने राजद्वाररूढखलवृत्तांतोपिप्रतीयते तत्रकिंवस्कृतस्तथाभूतोरगवृत्तांनएवप्रस्तुतेऽप्रस्तुतः खलवृत्तांतस्ततःप्रतीयतइतिसमासोक्तिः यद्वाप्रस्तुतखलवृत्तांतप्रत्यायनोयाप्रस्कृतमहोरगवृत्तांतकीर्त्तनमप्रस्कृतप्रशंसा यद्वावर्ण्यमानमहोरगवृत्तांतकीर्तनेनसमीपस्थितखलमर्मोद्घाटनंक्रियतइतिउभयस्यापिप्रस्तुतत्वात्प्रस्कृतांकुरइतिसंदेहः एकवाचकानुप्रवेशसंकरस्तुशब्दार्थालंकारयोरेवेतिलक्षयित्वाकाव्यप्रकाशकारउदाजहार स्पष्टोल्लसत्किरणकेसरसूर्यबिंबविस्तीर्णकर्णिकमथोदिवसारविंदं श्लिष्टाष्टदिग्दलकलापमुखावतारबद्धांधकारमधुपावलिसंचुकोच कर्णिकावराटोयस्यतत् श्लिष्टाःप्रकाशाभावेनपरस्परंमिलिताअष्टदिशएवदलानांकलापस्तन्मुखेनावतारोयस्यास्तादृशीबद्धाअंधकाररूपामधुपावलिर्येनतथाभूतमित्यर्थः ७ ७ ७ 

पदभेदेनेति सोणत्थिएत्थगामेजोएअंमहमहंतलाअंणं तरुणाणंहिअअलूडिंपरिसप्पंतिंणिवारेइ सनास्त्यत्रग्रामेयएतांस्फुरल्लावण्यां तरुणानांहृदयलुंठनंपरिसर्पंतिनिवारयतीतिसंस्कृतं अत्रपूर्वार्द्धेऽनुप्रासस्तृतीयपादेरूपकमितितयोः संसृष्टिः वाच्यप्रतियोगिक त्वादिति वाच्यंप्रतियोगिप्रतिसंबंधियस्यतद्वाच्यप्रतियोगिकंतत्वादित्यर्थः एवंचकाव्यावाच्यस्यानुप्रसादेःशब्दालंकारस्यतदनुप्रवेशोन

अत्रैकपदानुप्रविष्टोरूपकानुप्रासोयत्रैकस्मिन्श्लोकेपदभेदेनशब्दार्थालंकारयोःस्थितिस्तत्रतयोःसंसृष्टिरि हतुसंकरइति अलंकारसर्वस्वकारस्तुएकस्मिन्वाचकेऽनुप्रवेशोवाच्ययोरेवालंकारयोःस्वारसिकःवाच्यप्रति योगिकत्वाद्वाचकस्येतिमत्वार्थालंकारयोरप्येकवाक्यानुप्रवेशसंकरमुदाजहार सत्पुष्करद्योतितरंगशोभिन्य मंदमारब्धमृदंगवाद्ये उद्यानवापीपयसीवयस्यामेणीदृशोनाद्यगृहेरमंते अत्रनाद्यगृहवापीपयसोःसत्पु ष्करेत्यादिविशेषणेशब्दसाम्यंश्लेषः वाचकानुप्रवेशइतिवक्तुंयुक्तमितिभावः सत्पुष्करेति यस्यांनगर्यांएणीदृशउद्यानसंबं धिवापीपयसीवनाद्यगृहेरमंतेक्रीडंति कीदृशेसमीचीनैःपुष्करैःकमलैर्द्योतिनोयेतरंगास्तच्छोभावति गृहपक्षेसमीचीनैःपुष्करैर्वाद्यभांड मुखैर्द्योतितोयोरंगोनृत्यभूमिस्तच्छोभिनीत्यर्थः पुष्करंकरिहस्ताग्रेवाद्यभांडमुखेजले व्योम्निखड्गफलेपद्मइत्यमरः ७

श्लेषभित्तिकेति श्लेषोभित्तिरिवभित्तिर्मूलंयस्येत्यर्थः रागवतीति रागोऽनुरागोरक्तिमाच अंबरमाकाशंवस्त्रंच नन्वत्रविशेषणसाम्या
श्रमेदाध्यवसायापेक्षणेपि त्वत्पुष्करेत्यादौ शब्दसाम्यमात्रेणाप्युपमोपपत्तेर्नतदपेक्षेत्यत आह शब्देति शब्दतोऽर्थतोवेति शब्दप्रयु

अभेदमारब्धेत्यादिविशेषणेऽर्थसाम्यमुपमातदुभयमेकस्मिन्निवशब्देऽनुप्रविष्टमिति तदपिनमन्यामहे
सत्पुष्करेत्यादिविशेषणेपि श्लेषभित्तिकाभेदाध्यवसायरूपातिशयोक्तिलभ्यस्यधर्मसाम्यस्यैवतत्रै
वशब्दप्रतिपाद्यतयाशब्दसाम्यस्यतदप्रतिपाद्यत्वात् श्लेषभित्तिकाभेदाध्यवसायेन. धर्मसाम्य
मतानंगीकारे अहोरागवतीसंध्याजहातिस्वयमंबरमित्यादिश्लिष्टविशेषणसमासोक्त्युदाहर
णेविशेषणसाम्याभावेनसमासोक्त्यभावप्रसंगात् शब्दसाम्यस्यैवशब्दप्रतिपाद्यत्वेपितस्योप
मावाचकत्वस्यैवप्राप्त्याश्लेषवाचकत्वाभावाच्च शब्दतोऽर्थतोवाकविसंमतसाम्यप्रतिपादनेस
र्वविधेप्युपमालंकारस्वीकारात् ७ ७ ७ ७

क्तमर्थप्रयुक्तंवायत् कविसंमतंसाम्यंतत्प्रतिपादनइत्यर्थः सर्वविधेसर्वप्रकारे ∴ ७ ७ ७

यथेति चदि आल्हादन इति धात्वनुसाराच्चंद्रपदमन्वर्थं अन्वर्थोऽन्वर्थनामा तस्मात् मतद्वयस्याप्ययुक्तत्वात् विधुकरेति सहंसः

अन्यथा यथा प्रल्हादनाच्चंद्रः प्रतापात्तपनो यथा तथैव सोभूदन्वर्थो राजा प्रकृतिरंजनात् इत्यत्राप्युपमान स्यात् न ह्यत्रान्वर्थनामरूपशब्दसाम्यं विना किंचिदर्थसाम्यं कविविवक्षितमस्ति तस्माद्यत्रैकस्मिन्नर्थे प्रतिपाद्यमाने अलंकारद्वयप्रतीतिस्तत्र तयोरलंकारयोरेकवाचकानुप्रवेशः यथा विधुकरपरिरंभादात्तनिष्पंदपूर्णैः शशिदृषदुपक्लृप्तैरालवालैस्तरूणां विफलितजलसेकप्रक्रियागौरवेण व्यरचि सहृतचित्तस्तत्र भैमीवनेन अत्र हि प्रतिपाद्यमानोर्थः समृद्धिमहद्वस्तुवर्णनमुदात्तमिति लक्षणानुसारादुदात्तालंकाररूपः असंबंधे संबंधकथनमतिशयोक्तिरिति लक्षणादतिशयोक्तिश्च न च सर्वत्रोदात्तस्यासंबंधे संबंधवचनरूपत्वं निर्णीतमिति न विविक्तालंकारद्वयलक्षणसमावेशोस्तीति वाच्यं

तत्र भैमीवनेन दमयंत्या उद्यानेन हृतचित्तो व्यरचि कृतः कथंभूतेन चंद्रकिरणाश्लेषादात्तैरंगीकृतैर्निष्पंदैः पूर्णैश्चंद्रकांतघटितैस्तरूणामालवालैर्विफलीकृतजलसेकप्रकाररूपगौरवेणेत्यर्थः

शब्दव्यवस्थितेति शब्दप्रयुक्तेत्यर्थः तथा च समप्राधान्यमर्थभेदविषयमिति भावः प्रतिक्षिप्यते निवार्यते कोट्यंतरमनेनेति प्रतिक्षेपो वि- रोधः मुक्ता इति विदुषां भवनेषु मंदिरेषु केलीकरतक्रिडायां विछिन्नसूत्रात् हारात् गलिताः संमार्जनीभिरपसारिताः प्रातःकाले गणसी



दिव्यलोकगतसंपत्समृद्धिवर्णनादिषु अतिशयास्पृष्टस्योदात्तस्य शौर्यौदार्यदारिद्र्यादिविषयवर्णनेषूदात्ता स्पृष्टाया अतिशयोक्तेश्च परस्परविविक्ततया विश्रांतेः तयोश्चेहार्थवशसंपन्नसमावेशायोर्नांगांगिभा वः एकेनापरस्यानुत्थापनात्—स्वातंत्र्यपारतंत्र्यविशेषादर्शनाच्च नापि समप्राधान्यं येशब्दैरिह संबंधि वस्तु प्रतिपाद्यते तैरेव तस्यैव वस्तुनो संबंधे संबंधरूपस्य प्रतिपाद्यमानतया भिन्नप्रतिपादकशब्दव्यवस्थितार्थभेदाभावात् नापि संदेहसंकरः एकालंकारकोट्यां तदन्यालंकारकोटिप्रतिक्षेपाभावात् तस्मादिहोदात्तातिशयोक्त्योरेकवाचकानु प्रवेशलक्षणः संकरः क्वचित्संकराणामपि संकरो दृश्यते यथा मुक्ताः केलिविसूत्रहारगलिताः संमार्जनीभिर्हृताः प्रातः प्रांगणसीम्नि मंथरचलद्बालांघ्रिलाक्षारुणाः दूराद्दाडिमबीजशंकितधियः कर्षति केलीशुकायद्विद्वद्भवने षु भोजनृपतेस्तत्त्यागलीलायितं

मांते मंदं चलतां बालानां चरणलाक्षारसेनारुणाः मुक्ताः दूराद्दाडिमबीजशंकितधियः क्रीडाशुकायत्क र्षति आकर्षति तद्भोजनृपतेस्त्यागस्य दानस्य लीलायितमित्यन्वयः ॥ ॥ १७१

तत्रैव बालांघ्रिलाक्षारुणाइत्यत्रैव वक्ष्यमाणेति शंकितधियइतिवक्ष्यमाणेत्यर्थः तयोःतद्गुणकाव्यलिंगयोः तन्मूलः संकरमूलः

अत्र तावद्द्विदुपां संपत्समृद्धिवर्णनमुदात्तालंकारः तन्मूलको बालांघ्रिलाक्षारुणाइत्यत्र तद्गुणालंकारः तत्रैव वक्ष्यमाणभ्रांत्युपपादकःपदार्थहेतुककाव्यलिंगालंकारश्चेति तयोरेकवाचकानुप्रवेशसंकरः तन्मूलः शंकितधियइत्यत्रभ्रांतिमदलंकारः ताभ्यांचोदात्तालंकारश्चारुतांनीतइतितयोश्चतस्यचांगांगिभावसंकरः एवंविद्वद्गेहवैभवस्यहेतुमतो राज्ञोवितरणविलासस्यहेतोश्चाभेदकथनं हेत्वलंकारः सचराज्ञोवितरणविलासस्यनिरतिशयोत्कर्षाभिव्यक्तिपर्यवसायी एतावन्मात्रे कविसंरंभश्चेदुक्तरूपोदात्तालंकारपरिष्कृते हेत्वलंकारे विश्रांतिः कीदृशी संपदिति प्रश्नोत्तरतया निरतिशयैश्वर्यवितरणरूपाप्रस्तुतकार्यमुखेन तदीयसंपदुत्कर्षप्रशंसनेकविसंरंभश्चेत्कार्यनिबंधना प्रस्तुतप्रशंसालंकारे विश्रांतिः कार्यस्यापि वर्णनीयत्वेन प्रस्तुतत्वाभिप्राये तु प्रस्तुतांकुरे विश्रांतिः अत्र विशेषानध्यवसायात् संदेहसंकरः

ताभ्यां संकरभ्रांतिमद्भ्यां तयोः संकरभ्रांतिमतोः तस्य उदात्तस्य हेतुमतः कार्यस्य अभेदकथनं तत्त्यागलीलायितस्य कार्यमिति वक्तव्ये तदेवत्यागलीलायितमित्यभेदकथनं तदीयेति राजकीयेत्यर्थः

अतथ्योदार्येति असत्यौदार्येत्यर्थः तन्मूलकस्येति वितरणोत्कर्षपर्यवसायिहेत्वलंकारमूलकस्येत्यर्थः ननुराजसंपत्समृद्धेर्व्यंजनाग म्यत्वेनावाच्यत्वात्कथंतद्वर्णनात्मकोदात्तालंकारेण सहैकवाचकानुप्रवेशकथनमित्याशंकायामाह वाचकशब्दस्येति त्रयाणामिति एक

किंच विद्वद्गृहवैभववर्णनस्यासंबंधेसंबंधकथनरूपतयाऽतिशयोक्तेरुदात्ता लंकारेण सहैकवाचकानुप्रवेशसंकरः निरतिशयवितरणोत्कर्षपर्यवसायिनो हेत्वलंकारस्याप्यद्भुतातथ्योदार्यवर्णनात्मिकयात्युक्त्यासहैकवाचकानुप्रवेशसं करः तन्मूलकस्याप्रस्तुतप्रशंसालंकारस्यप्रस्तुतांकुरस्यवाराजसंपत्समृद्धिवर्ण नात्मकोदात्तालंकारेण सहैकवाचकानुप्रवेशसंकरः वाचकशब्दस्यप्रतिपा दकमात्रपरतयाव्यंजकसाधारण्यादेषांचत्रयाणामेकवाचकानुप्रवेशसंकराणां समप्राधान्यसंकरः

उदात्तातिशयोक्त्योरपरोहेत्वत्युक्त्योरन्योन्यंप्योदात्ताप्रस्तुतप्रशंसाप्रस्तुतांकुरान्यतरयोरित्येवंत्रयाणांपरस्परमित्यर्थः ७

उदात्तालंकारस्य हेत्वलंकारांगतायाः पूर्वमुक्तत्वादुदात्तातिशयोक्तिसंकरस्यापि तदंगत्वमितिशंकां निरस्यति उदात्तादिमात्रस्यैवेति उदात्तादीत्यादिपदेन हेत्वलंकारपरिग्रहः हेत्वलंकारा दीत्यादिपदेन चाप्रस्तुतप्रशंसापरिग्रहः तत्रापि निरतिशयैश्वर्यवितरणोत्कर्ष पर्यवसायिनो हेत्वलंकारस्यैव तादृशवितरणरूपकार्यपरिष्कारद्वारा तद्गम्यप्रस्तुतराजसंपदुत्कर्षप्रशंसारूपायामप्रस्तुतप्रशंसाय

नह्येतेषां परस्परमन्यत्रांगत्वमस्ति उदात्तादिमात्रस्यैव हेत्वलंकारादिचारुतापादकत्वे नातिशयोक्तिसंकरस्यांगतयाऽनपेक्षणात् एवमत्र श्लोके चतुर्णामपि संकराणां यथायोग्यं संकरः एवमन्यत्राप्युदाहरणांतराण्यूह्यानि ७ ७

मंगत्वं न त्वद्भुततातथ्यवर्णनारूपात्युक्तिसंकरस्याप्यपेक्षेति भावः यथायोग्यमिति तथाहि उदात्ततद्गुणयोरंगांगिभावसंकरस्य भ्रांतिमदुदात्तयोरंगांगिभावसंकरस्य चांगांगिभावे च संकरः तथा भ्रांतिमदुदात्तयोरंगांगिभावसंकरस्योदात्तांगकहेत्वलंकारा दिसंदेहसंकरस्य चांगांगिभावेन संकर इति सूक्ष्ममतिभिरूहनीयं ७ ७ ७

स्वकीर्त्यनुवृत्तये ग्रंथनाम स्वनामचोपनिबध्नन् ग्रंथपूर्तिमनुवदति अमुमिति स्वग्रंथस्य प्रामाणिकत्वं सूचयितुमाह चंद्रालोकइ
नि शरदागमसंज्ञकश्चंद्रालोकमूलभूतोग्रंथः शरत्कालागमनेन चंद्रस्यालोकइतिश्लेषः तस्माच्च कुवलयानंदः स्वग्रंथो ऽभूत् कुव
लस्य कुमुदस्यानंदइतिचश्लेषइतिशिवमास्तां विद्वद्वृंदमहामान्यरामचंद्रात्मजन्मना विदुषावैद्यनाथेन कृतालंकारचंद्रिका ए

अमुं कुवलयानंदमकरोदप्पदीक्षितः नियोगाद्वेंकटपतेर्निरुपाधिकृपानिधेः चंद्रालोकोविजयतां
शरदागमसंभवः हृद्यः कुवलयानंदो यत्प्रसादादभूदयं इतिश्रीमदद्वैतविद्याचार्यश्रीमद्द्विजकु
लजलधिकौस्तुभश्रीरंगराजाध्वरींद्रवरदसूनोरप्पदीक्षितस्य कृतिः कुवलनंदः समाप्तः ॥ ॥

नां कुवलयानंदप्रकाशनविशारदां विदां कुर्वंतु विद्वांसः काव्यतत्वविदांवराः असौ कुवलयानंदश्चंद्रालोकोत्थितोपि सन् प्र
तिष्ठां लभते नैव विनालंकारचंद्रिकाम् इतिश्रीमत्पदवाक्यप्रमाणज्ञतत्सद्रामभट्टात्मजवैद्यनाथकृताऽलंकारचंद्रिकाख्या कु
वलयानंदटीका संपूर्णा अष्टर्तुसप्तेंदुमितेशाके पूर्णाख्यपत्तने यत्नतः पाठशालायामंकितोऽयं शिलाक्षरैः ॥ ॥

# अथालंकाराणामनुक्रमः

## तत्रादौ शतमलंकाराः

| प० | अलंकाराः | प० | अलंकाराः | प० | अलंकाराः | प० | अलंकाराः | प० | अलंकाराः |
|---|---|---|---|---|---|---|---|---|---|
| १०८ | ४१ अधिकं | ११३ | ५१ पर्यायः | १२२ | ६१ अर्थातरंन्यासः | १३४ | ७१ अनुज्ञा | १४३ | ८१ उन्मीलितं |
| १०८ | ४२ अल्पं | ११५ | ५२ परिवृत्तिः | १२६ | ६२ विकस्वरः | १३५ | ७२ लेशः | १४३ | ८२ विशेषः |
| १०९ | ४३ अन्योन्यं | ११५ | ५३ परिसंख्यः | १२७ | ६३ प्रौढोक्तिः | १३७ | ७३ मुद्रा | १४४ | ८३ उत्तरं |
| ११० | ४४ विशेषः | ११५ | ५४ विकल्पः | १२८ | ६४ संभावना | १३८ | ७४ रत्नावली | १४५ | ८४ सूक्ष्मं |
| ११० | ४५ व्याघातः | ११६ | ५५ समुच्चयः | १२८ | ६५ मिथ्याध्यवसितिः | १४० | ७५ तद्गुणः | १४६ | ८५ पिहितं |
| १११ | ४६ कारणमाला | ११७ | ५६ कारकदीपकं | १२९ | ६६ ललितं | १४० | ७६ पूर्वरूपं | १४६ | ८६ व्याजोक्तिः |
| ११२ | ४७ एकावली | ११७ | ५७ समाधिः | १३० | ६७ प्रहर्षणं | १४१ | ७७ अतद्गुणः | १४७ | ८७ गूढोक्तिः |
| १०[illegible] | ४८ [illegible]रीनकं | ११८ | ५८ प्रत्यनीकं | १३१ | ६८ विषादनं | १४१ | ७८ अनुगुणः | १४८ | ८८ विवृतोक्तिः |
| [illegible] | ४[illegible] [illegible]ारः | ११८ | ५९ काव्यार्थापत्तिः | १३३ | ६९ उल्लासः | १४२ | ७९ मीलितं | १५० | ८९ युक्तिः |
| ११३ | ५० यथासंख्यं. | ११९ | ६० काव्यलिंगं | १३४ | ७० अवज्ञा | १४२ | ८० सामान्यं | १५० | ९० लोकोक्तिः |

| प० | | अलंकाराः |
|---|---|---|
| १५१ | ९१ | छेकोक्तिः |
| १५२ | ९२ | वक्रोक्तिः |
| १५२ | ९३ | स्वभावोक्तिः |
| १५२ | ९४ | भाविकं |
| १५३ | ९५ | उदात्तं |
| १५४ | ९६ | अत्युक्तिः |
| १५४ | ९७ | निरुक्तिः |
| १५४ | ९८ | प्रतिषेधः |
| १५५ | ९९ | विधिः |
| १५६ | १०० | हेतुः |

पंचदशालंकाराः

| प० | | अलंकाराः | प० | | अलंकाराः |
|---|---|---|---|---|---|
| १५७ | १ | रसवान् | १६० | ९ | अनुमानं |
| १५८ | २ | प्रेयः | १६१ | १० | उपमानं |
| १५८ | ३ | ऊर्जस्वित् | १६२ | ११ | शब्दः |
| १५९ | ४ | समाहितं | १६३ | १२ | अर्थापत्तिः |
| १५९ | ५ | भावोदयः | १६४ | १३ | अनुपलब्धिः |
| १५९ | ६ | भावसंधिः | १६४ | १४ | संभवः |
| १६० | ७ | भावशबलता | [illegible] | १५ | ऐतिह्यं |
| १६० | ८ | प्रत्यक्षं | | | |

उक्तालंकाराणां मिलने पृथक् पंचालंकाराः

| प० | | अलंकाराः |
|---|---|---|
| १६५ | १ | संसृष्ट्यलंकारः |
| | | संकरालंकारे |
| १६६ | २ | अंगांगिभावसंकरः |
| १६७ | ३ | समप्राधान्यसंकरः |
| १६९ | ४ | संदेहसंकरः |
| १७० | ५ | एकवाचकानुप्रवेशसंकरः |

